# KÂVYA-PRAKÂSH OF MAMMATA
# ULLÂSA X.



WITH

## THE CORRESPONDING PORTION

OF

## THE KÂVYA-PRADÎPA OF GÔVINDA

AND

## THE UDYÔTA OF NÂGÔJÎ-BHATTA

*EDITED BY*

DINKAR TRIMBAK CHANDORKAR B. A.

PROFESSOR OF SANSKRIT

*FERGUSSON COLLEGE*

WITH

Notes and Appendix.





POONA.

1896.

our notice, we are impressed by the circumstance, as when we see the resemblance of a child to its parent. The Figures named Simile, Metaphor, Allegory, are modes of increasing the force of style in this way. The third power of the intellect is Retentiveness or Acquisition. The ability to retain successive impressions without confusion, and to bring them up afterwards, distinguishes mind; it is a power familiarly known by the name Memory. Now the chief way that retentiveness or memory works is this :—Impressions occurring together, become associated together, as sunrise with day-light, and when we are made to think of one, we are reminded of the accompaniments. We cannot think of the sun's rising, without remembering day-light, and the other circumstances that go along with it. Hence, the mental association of things contiguously placed, is a prominent fact of the mind; and one of its many consequences is that we often name a thing by some one of its adjuncts, as 'the throne' for the sovereign, 'gold' for wealth. Such is the nature of the Metonymy.'

Many of the *Alankáràs* treated in this Ullàsa may also be classified under these three intellectual operations as follows :—

A. Figures founded on Similarity.

| | | |
|---|---|---|
| उपमा | उत्प्रेक्षा | निदर्शना |
| अनन्वय | रूपक | व्यतिरेक |
| उपमेयोपमा | अतिशयोक्ति I. & III. | सहोक्ति |
| प्रतीप | तुल्ययोगिता | समासोक्ति |
| भ्रान्तिमान् | दीपक I. | सामान्य |
| ससंदेह | प्रतिवस्तूपमा | मीलित |
| अपन्हुति | दृष्टांत | अप्रस्तुतप्रशंसा V. |
| | | सम |

B. Figures founded on Contrast.

| | | |
|---|---|---|
| विरोध | अन्योन्य | अतिशयोक्ति II. & IV. |
| विभावना | विशेष | विनोक्ति |
| विशेषोक्ति | व्याघात | परिसंख्या |
| असंगति | अधिक | उत्तर II. |
| विषम | अतद्गुण | |

## C. Figures founded on Contiguity.

सूक्ष्म, स्मरण, उत्तर I., अप्रस्तुतप्रशंसा I. II. III. & IV.

### Miscellaneous.

कारणमाला, एकावली, मालादीपक, सार.
These according to P. are शृंखलान्यायमूल *Alankârâs.*

काव्यलिंग, अर्थान्तरन्यास, अनुमान.
These according to P. are तर्कन्यायमूल *Alankârâs.*

| | | |
|---|---|---|
| यथासंख्य | व्याजस्तुति | भाविक |
| पर्याय | पर्यायोक्त | प्रत्यनीक |
| परिवृत्ति | समुच्चय | उदात्त |
| दीपक II. | समाधि | तद्गुण |
| परिकर | स्वभावोक्ति | संसृष्टि |
| आक्षेप | श्लेष | संकर |

# A LIST OF ABBREVIATIONS USED IN THE BOOK.

Pr.—Prabhâ a commentary on the Kâvya-pradîpa by Vaidyanâtha Tatsat.

S. D.—Sâhitya-darpaṇa by Vis'vanâtha.

R. G.—Rasa-gangâdhara by Jagannâtha.

Viv.—Tàtparya-vivaraṇa by Maheshchandra.

K. P.— } Vâm.— } Kâvya-prakâsha, Mr. Vâmanâchârya's first edition.

San.—Sanketa by Mânikya-chandra.

Ku.— } Kuv.— } Kuvalayânanda by Appayâ Dixit.

Chan.—Udharaṇa-chandrikâ by Vaidyanâtha Tatsat.

Cha.— } Chakra.— } Vistârikâ by Chakravarti.

Sâr.—Sârabòdhinî by S'rivatsa-lânchhana.

S. T.—Bâla-chittânuranjanî by Sarasvatî-tîrtha.

Sud.— } Sudh.— } Sudhâ-sâgara by Bhîmasena.

D. V.—Darpaṇa-vivriti, a commentary on the Sâhitya-darpaṇa.

Nid.—Nidarshana by Ânanda kavi.

Kam.—Kamalâkarî by Kamalâkara.

A.—A commentary on the Kuvalayânanda by Âshâdhara.

Ru.—Kâvyâlankâra by Rudrata.

Na.—A gloss on the Kâvyâlankâra by Namisâdhu.

Ch.—Chandrikâ on the Kuvalayananda by Vaidyanâtha.

Vâ.—Vâmana-Sûtra-Vritti.

Dan.—Kâvyâdarsha by Dandin.

Vâg.—Vâg-bhatâlankâra.

S. K.—Sarasvatî-Kanthâbharaṇa.

A. S.—Alankâra-sarvaswa.

Rat.—Ratnâkara.

P.—Pratâpa-rudra.

## काव्यप्रकाशे दशमोल्लासे प्रतिपादितानां विषयाणां वर्णानुसारेणानुक्रमणी ।

## काव्यप्रकाश-काव्यप्रदीप-स्थोदाहरणानुक्रमणी ।

## प्रमाणत्वेनोद्धृतानामन्यग्रन्थस्थश्लोकानामनुक्रमणी ।



## उद्योतस्थश्लोकानुक्रमणी ।



* एतच्चिह्नितश्लोकाः केवलप्रदीपस्थाः ।

# अथ काव्यप्रकाशः ॥

## दशमोल्लासः ।

अर्थालंकारानाह,

**अथ काव्यप्रदीपे दशमोल्लासः**—अथार्थालंकारा लक्षणीयाः । ते च

उपमानन्वयस्तद्वदुपमेयोपमा ततः ।
उत्प्रेक्षा चससंदेहो रूपकापह्नुती तथा ॥
श्लेषस्तथा समासोक्तिः प्रोक्ता चैव निदर्शना ।
अप्रस्तुतप्रशंसातिशयोक्ती परिकीर्तिते ॥
प्रतिवस्तूपमा तद्वद्दृष्टान्तो दीपकं तथा ।
तुल्ययोगितया चैव व्यतिरेकः प्रकीर्तितः ॥
आक्षेपो विभावना च विशेषोक्तिस्तथैव च ।
यथासंख्यमर्थान्तरन्यासः स्यातां विरोधवत् ॥
स्वभावोक्तिस्तथा व्याजस्तुतिः प्रोक्ता सहोक्तिवत् ।
विनोक्तिपरिवृत्ती च भाविकं काव्यलिङ्गवत् ॥
पर्यायोक्तमुदात्तं च समुच्चय उदीरितः ।
पर्यायश्चानुमानं च प्रोक्तः परिकरस्तथा ॥
व्याजोक्तिपरिसंख्ये च विज्ञेये हेतुमालया ।
अन्योन्यमुत्तरं सूक्ष्मसारौ तद्वदसंगतिः ॥
समाधिश्च समेन स्याद्विषमस्त्वधिकेन च ।
प्रत्यनीकं मीलितं च स्यातामेकावलीस्मृती ॥
भ्रान्तिमांस्तु प्रतीपेन सामान्यं च विशेषवत् ।
तद्गुणातद्गुणौ चैव व्याघातः परिकीर्तितः ॥

**अथोद्योते दशमोल्लासः**—अथार्थेति । प्रसंगादिति भावः । न्यू-

**साधर्म्यमुपमा भेदे,**

**उपमानोपमेययोरेव, ( न कार्यकारणादिकयोः ) साधर्म्यं भवतीति तयोरेव समानेन धर्मेण संबन्ध उपमा । भेदग्रहणमनन्वयव्यवच्छेदाय ॥**

---

संसृष्टिसंकरौ चैवमेकषष्टिरुदीरिताः ॥

तेष्वनेकालंकारमूलभूतत्वेन सौकुमार्यातिशयाच्च प्रधानमुपमां प्रथमं लक्षयति—**साधर्म्यमिति ।**

'ननु' साधर्म्यस्य प्रतियोग्यनुयोगिनिरूप्यतया तदनभिधाने न्यूनत्वं लक्षणवाक्यस्येति चेत्, न । आक्षेपादुपमानोपमेयरूपयोस्तयोर्लाभात् । न च प्रतियोग्यनुयोगिमात्राक्षेपेऽतिप्रसङ्गः । उपमानोपमेये विनाऽन्यस्य कार्यकारणादिमात्रस्य साधर्म्याभावात् । एवं चोपमानोपमेययोः समानेन धर्मेण संबन्ध उपमेति लक्षणम् । अत्र चोपमानोपमेययोराक्षेपः साधर्म्यप्रतिपत्तिमात्रफलकः, न तु व्यावर्तकः । नन्वेवं ' भेदे ' इत्यनुपादेयम् । तस्याप्याक्षेपादेव लाभसंभव-

---

नाधिक्यव्यवच्छित्तये तानादौ गणयति । **ते चेति** । **तेष्वनेकेति** । उपमेयोपमानन्वयप्रतीपस्मरणरूपकससंदेहभ्रांतिमदपन्हवोत्प्रेक्षातिशयोक्तितुल्ययोगितादीपकप्रतिवस्तूपमादृष्टांतनिदर्शनाव्यतिरेकसहोक्तिसमासोक्त्याद्यनेकेत्यर्थः। **सौकुमार्येति** । इतरालंकारापेक्षया अस्याः स्फुटतया विभावाद्युत्कर्षकत्वादिति भावः। **साधर्म्यमिति** । उपमानोपमेययोर्भेदे सति वाक्यार्थोपस्कारकं चमत्कारि साधारणधर्मवत्त्वमित्यर्थः। चमत्कारीत्यनेन 'गौरिव गवयः' इत्यादेर्व्यावृत्तिः। वाक्यार्थोपस्कारकमिति अलंकारसामान्यलक्षणप्राप्तम्। **अतिप्रसंग इति**। कार्यकारणयोरतिप्रसंग इति भावः । **समानेनेति** । एकत्वबुद्धिविषयेणेत्यर्थः । **संबंध इति** । समानो धर्मो ययोस्तौ सधर्माणौ तयोर्भावः साधर्म्यमिति समासोत्तरवर्तिभावप्रत्ययस्य संबंधबोधकत्वादितिभावः । प्रकृष्टत्वेन संभाव्यमानत्वमुपमानत्वं, निकृष्टत्वेन तत्त्वमुपमेयत्वमिति केचित् । सादृश्यप्रतियोगित्वानुयोगित्वे चोपमानोपमेयत्वे इति बहवः। **न तु व्यावर्तक इति**। कार्यकारणादिकयोः साधर्म्यस्यैवाभावादिति भावः । न च कारणगुणानुसारी कार्ये गुण इति व्यवहारात्तयोरपि साधर्म्यमस्त्येवेति वाच्यम्। कविप्रतिभाकलिपतांशाभावेन तस्याऽनलंकारत्वमित्याभिमानात् । **आक्षेपादिति**। एकधर्मवत्त्वमिति व्यवहारस्य भेद

---

१ च. छ. समानधर्मेण । २ ( ख ) आदौ तान्

**पूर्णा लुप्ता च,**

**उपमानोपमेयसाधारणधर्मोपमा–प्रतिपादकानामुमादाने पूर्णा । एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता ।**

---

त् । न ह्यभेदे सादृश्यात्मकं साधर्म्यमिति चेत्, न । साधर्म्यपदस्यारोपितानारोपितसाधारणसमानधर्मसंबन्धमात्रपरत्वेनारोपितसाधर्म्यनिबन्धनस्यानन्वयालंकारस्य व्यवच्छेद्यत्वात् । ' अलंकारत्वे सति ' इत्यपि पूरणीयम् । साधर्म्यमात्रस्योपमात्वाभावात् ।

एनां विभजते—**पूर्णेति** ।

यत्रोपमानोपमेयसाधारणधर्माणामुपमाप्रतिपादकशब्दस्य चोपादानं सा पूर्णा । एतच्चतुष्कमध्ये एकस्य द्वयोस्त्रयाणां वाऽनुपादानं यत्र सा लुप्ता ।

---

एव संभवादिति भावः । **न ह्यभेदे इति** । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्यैव सादृश्यपदार्थत्वादिति भावः । **आरोपितेति** । अत एव ' त्वयि कोपोयमाभाति सुधांशाविव पावकः ' इत्यादावुपमानिर्वाहः । तत्र हि उपमानस्यात्यंताऽसंभावितत्वेन सादृश्यस्य लोकसिद्धत्वाभावेऽपि कविना[1] खडशः पदार्थोपस्थितिमता स्वेच्छया संभावितत्वेनाकारेण चंद्राधिकरणकमनलं प्रकल्प्य तेन सह साम्यस्यापि कल्पनात् । कल्पितस्यापि भावनोपनीतकांतेव चमत्कारित्वमविरुद्धमिति भावः।**आरोपितसाधर्म्येति**। तत्र ह्याहार्यारोपितभेदेनापाततः सादृश्यप्रतीतिः, पर्यंते तु तस्य बाधप्रतिसंधानेन द्वितीयसदृशव्यवच्छेदः फलतीति भावः। ननु तत्तदुत्कर्षविशेषाणां वैचित्र्यं क्वोपयुज्यत इति चेत्, मुखादिनिष्ठानां तेषां वैचित्र्यं उद्दीपनविभावतया विचित्रविचित्रास्वादे इति गृहाण । ' उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगंगापयसः पतेताम्। तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ' इत्यादौ नोपमा। यदि तथाभूतौ स्यातां तदोपमीयेत न चैवमित्युपमानिष्पत्त्यभावात् । किं तु यद्यर्थोक्तौ च कल्पनमित्यतिशयोक्तिरेवेति न दोषः।'भद्रात्मनः' इत्यादौ व्यंग्योपमाया वाच्यापेक्षया प्राधान्येऽपि व्यंग्यभावाद्युपस्कारकत्वेनालंकारत्वस्येष्टत्वेन दोषाभावात् न अव्यंग्यत्वं अप्रधानत्वं वा विशेषणं देयमित्याहुः । **साधर्म्यमात्रस्येति** । घट इव पटो द्रव्यं, घट इव पटो जातिमानित्यादेरित्यर्थः । **यत्रोपमानोपमेयेति** । सादृश्यप्रतियोगि-

---

१ ( ख ) काविना स्वेच्छया.

**साग्रिमा ।**

**श्रौत्यार्थी च भवेद्वाक्ये समासे तद्धिते तथा ॥ १ ॥**

अग्रिमा पूर्णा । यथेववादिशब्दा यत्परास्तस्यैवोपमानताप्रतीतिरिति यद्यप्युपमानविशेषणान्येते; तथाऽपि शब्दशक्तिमहिम्ना श्रुत्यैव षष्ठीवत् संबन्धं प्रतिपादयन्तीति तत्सद्भावे श्रौती उपमा । तथैव, "तत्र तस्येव"–( पा० सू० ५।१।११६ ) इत्यनेनेवार्थे विहितस्य वतेरुपादाने । 'तेन तुल्यं मुखम्'–इत्यादावुपमेये एव, 'तत्तुल्यमस्य'[२]–इत्यादौ चोपमाने एव, 'इदं च तच्च तुल्यम्' इत्युभयत्रापि तुल्यादिशब्दानां विश्रान्तिरिति साम्यपर्यालोचनया तुल्यताप्रतीतिरिति[१] साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी; तद्वत, "तेन तुल्यं क्रिया चेद्वतिः" ( पा० सू० ५।१।११५ ) इत्यनेन विहितस्य वतेः स्थितौ ।

---

तयोः पूर्णां विभजते—**साग्रिमेति ।**

अग्रिमा प्रथमोद्दिष्टा । पूर्णेत्यर्थः। वाक्यं विग्रहः। तेनोपमानादिपदानि चत्वार्यपि यत्रासमस्तानि भिन्नविभक्तिकानि सा वाक्यगा। यत्र तु तेषु कयोरपि समासः सा समासगा। तद्धितेनोपमाप्रतिपादकेन तु सममुपमानवाचिन्याः प्रकृतेर्न समासो नापि विग्रह इति तृतीय उपमाभेदः । त्रिविधाप्येषा श्रौत्यार्थीभेदात्प्रत्येकं द्विधेति षड्विधा पूर्णेत्यर्थः । श्रौतत्वं चोपमानोपमेययोः साधारणधर्मसंबन्धरूपायास्तस्याः शाब्दबोधविषयत्वम् । अर्थापत्तिगम्यत्वं चार्थत्वम् । तत्र यथेववादिशब्दानां 'तत्र तस्येव' इत्यनेनेवार्थे विहितस्य वतेश्चोपादाने श्रौती । तुल्यादीनां शब्दानां 'तेन तुल्यम्–' इत्यादिना तुल्यार्थे विहितस्य वतेश्च प्रयोगे आर्थी । नन्वयं विभागोऽनुपपन्नः । उभयत्र सादृश्यप्रत्ययाविशेषात् । न च वाच्यं यथादिशब्दैः साधारणधर्मसंबन्ध उभयत्र शक्त्यैव बो-

---

त्वानुयोगित्वे चोपमानत्वोपमेयत्वे इति बोध्यम् । **श्रौतत्वं चोपमानेति** । एवं च सादृश्यप्रयोजकसाधारणधर्मसंबंधस्येवादिशक्यस्योभयवृत्तितया शाब्दबोधविषयत्वे श्रौतत्वमित्यर्थः । **अर्थापत्तीति** । तुल्यादीनां सादृश्यवति शक्तेः सादृश्यस्य साधारणधर्मसंबंधं विनाऽनुपपत्या तत्प्रतीतिरिति भावः । **उभयत्र सादृश्येति** । सादृश्यप्रयोजकसाधारणधर्मेत्यर्थः। **उभयत्र शक्त्यैवेति** । इवार्थे

---

१ छ. ज. ति तत्र सा° । २ ( ख ) श्रौतीत्व

ध्यते न पुनस्तुल्यादिशब्दैः, अयमेव विशेष इति। यतो यथादिशब्दा यद्नन्तरमुपात्तास्तस्यैवोपमानताप्रतीतिरित्युपमानविशेषणानि ते। अत उपमाने तत्संबन्धं बोधयन्तु न पुनरुपमेये। अन्यविशेषणस्यान्यत्र संबन्धबोधकत्वादर्शनादिति चेत्, न। शब्दशक्तिस्वाभाव्यादन्यविशेषणत्वेऽप्यन्यत्र संबन्धबोधकत्वात्। न चादृष्टचरत्वम्। षष्ठ्यां तथा दर्शनात्। षष्ठी हि यदनन्तरमुपात्ता तस्यैवोपसर्जनत्वप्रतीतिरित्युपसर्जनविशेषणत्वेऽपि प्रधानेऽपि संबन्धं बोधयति।

---

सादृश्ये नियमेन उपमानोपमेययोः प्रतियोगित्वानुयोगित्वाभ्यामन्वयादिति भावः। **यदनंतरम्**। यद्बोधकशब्दानंतरम्। **उपमानता**। सादृश्यप्रतियोगित्वम्। **उपमानविशेषणानीति**। उपमानविशेषणोपमानत्वद्योतकानीत्यर्थः। उपमानं विशिंषंति उपमानत्ववैशिष्ट्येन बोधयंतीत्यर्थात्। न च तस्य सादृश्यप्रतियोगित्वरूपोपमानत्वविशिष्टस्य स्ववृत्तिधर्मवत्त्वसंबंधेनोपमेये ऽन्वयेनोपमेयेऽपि तल्लाभः। नामार्थयोर्भेदेनान्वयाव्युत्पत्तेः। एवं च शक्त्योभयत्र साधारणधर्मसंबंधाप्रतीत्या नायं श्रौत्यार्थीविभाग उचित इति भावः। **शब्दशक्तीति**। स्वसदृशे उपमानवाचकपदलक्षणायां इवस्य तात्पर्यग्राहकत्वेन तस्याभेदेन नामार्थान्वयस्वीकारादित्याशयः। यथा-तथा-शब्दयोगे तु पश्चाज्जायमानसादृश्यविषयकबोधमादायेदं बोध्यम्। यद्धर्मवांश्चंद्रस्तद्धर्मवन्मुखमित्येव तत्र बोधात्। अन्यविशेषणत्वेऽपीत्यस्यान्यसंबंधद्योतकत्वेऽपीत्यर्थः। तत्र दृष्टांतमाह। **षष्ठ्यामिति**। तदेवोपपादयति। **षष्ठी हीति**। यदनंतरमित्यनेनोपसर्जनसंबंधित्वं बोधयति। उपसर्जनत्वं स्वार्थसंबंधे प्रतियोगित्वेनान्वयित्वम्। **उपसर्जनविशेषणत्वेऽपि**। उपसर्जननिष्ठाविशेषणतानिरूपितविशेष्यताश्रयत्वेऽपि। यद्वा यथा प्राचीनमते प्रकारीभूतविभक्त्यर्थसंबंधेन नामार्थयोर्भेदेनान्वयः। चैत्रस्य धनमित्यादौ स्वामिचैत्रीयं धनमिति बोधात्। तथा प्रकारीभूतनिपातार्थसंबंधेन नामार्थयोर्भेदेनान्वय इति चंद्रइव मुखमित्यादौ सदृशचंद्रीयं मुखमिति धीरिति प्राचीनमतेनायं ग्रंथः। श्रौतीत्वं सादृश्यप्रतियोगित्वरूपस्योपमानत्वस्यैवेन बोधनादिति बोध्यम्। परं त्वत्र पक्षे षष्ठ्या एव विशिष्यदृष्टांतत्वेनोपादाने बीजं चिंत्यम्। नन्वेवं तुल्यादिपदैरपि चंद्रेण तुल्यमित्यादौ तृतीयार्थान्वयद्वारा श्रुत्यैवोपमानत्वोपमेयत्वयोर्बोधात्

---

१ उपमानता सादृश्यप्रतियोगित्वमिति (ख) पुस्तके नोपलभ्यते

तस्मात्प्रतीत्यनुपपत्त्या प्रतीतानुपपत्त्या च संबन्धबोधे विशेषाच्छ्रौतार्थविभाग इति मन्तव्यम् । तथा हि 'पद्ममिव मुखम्' इत्यादावुपात्तस्याक्षिप्तस्य वा

---

श्रौती स्यादित्यत आह । **तस्मादिति । प्रतीत्यनुपपत्येति ।** अयं भावः । सादृश्यप्रयोजकसाधारणधर्मसंबंधो ह्युपमा । सादृश्यं चातिरिक्तः पदार्थः । धर्मविशेषश्च क्वचिदुपात्तः क्वचिदाक्षिप्त इत्यन्यत् । यथादयश्च तत्प्रयोजकधर्मविशेषसंबंध एव शक्ताः । न तुल्यादयः । ते हि सदृशमात्रवाचका इति । **उपमेय इति ।** समानविभक्त्यंतपदोपस्थाप्यत्वादिति भावः । **उपमाने इति ।** तत्त्वादेवेति भावः । एवं च सादृश्यादिपदयोगेऽप्यार्थ्येव । अपरे तु 'तत्तत्साधारणधर्मसंबंध उपमा । उपमानत्वं च साधारणधर्मवत्त्वेनेषदितरपरिच्छेदकत्वम् । तद्धर्मवत्तया परिच्छेद्यत्वं चोपमेयत्वमित्युपमानानीति सूत्रे भाष्ये स्पष्टम् । उपमानविशेषणानि ते इति । उपमाननिष्ठसाधारणधर्मबोधकानीत्यर्थः । एवमुपमानत्वमपीवाद्यर्थः । यदोपमानविशेषणोपमानत्वद्योतकास्ते इत्यर्थः । उपमाने तत्संबंधमिति । उपमानत्वस्वरूपस्य साधारणधर्मघटितत्त्वात्तत्र तत्संबंधबोधोस्त्वित्यर्थः । षष्ठी हीति । सा हि राज्ञः पुरुष इत्यादौ स्वस्वामिभावसंबंधबोधिका, प्रकृत्यर्थस्य विशेषणत्वबोधिका च । सा च विशेषणस्येतरविशेषणत्वार्थं संबंधस्याकांक्षणात्तन्निष्ठविशेषणत्वस्य तन्निष्ठस्वामित्वस्य बोधकत्वेऽपि पश्चात्प्रधाने पुरुषे संबंधस्य द्विष्ठतास्वभावत्वात् संबंधघटकं स्वत्वं बोधयति । तदाह यदनंतरमुपात्तेति । राज्ञ इत्यतश्च राजस्वामिकमिति बोधः । पुरुषपदेन च तद्विशेषसमर्पणमिति 'षष्ठी शेषे' इति सूत्रे भाष्ये स्पष्टम् । एवमिवादिभिः स्वसमभिव्याहृतचंद्रादावुपमानत्वं तन्निर्वाहक आल्हादकत्वादिसाधारणधर्मसंबंधश्च बोध्यते । तत्र साधारणधर्मवत्त्वेनेतरपरिच्छेदकत्वरूपोपमानत्वप्रतीतिस्तद्धर्मवत्परिच्छेद्यप्रतीतिं विना ऽनुपपन्नेति तमपि बोधयतीति भावः । एवं च चन्द्र इवेत्यत आल्हादकोपमानभूतचंद्राभिन्नमाल्हादक मुपमेयं मुखमिति बोधः । अत एवेवादिसमभिव्याहारे उपमानोपमेययोः समानविभक्तिकत्वनियमः । साधारणधर्मसंबंधश्च क्वचिद्विशेषणतया यथा चंद्र इव मुखमाल्हादकमित्यादौ । क्वचिद्विशेष्यतया यथा चंद्र इव मुखमाल्हादयतीत्यादौ । अत्र हि उपमानचंद्रकर्तृकाल्हादाभिन्नउपमेयमुखकर्तृकाल्हाद इति बोधः । अतोत्रापि तयोः समान-

(मणीयत्वादेः संबन्धमविषयीकृत्यापर्यवसानम्। यथादिशब्दानां धर्मविशेषसंबन्ध एव शक्तत्वात्। तुल्यादिशब्दास्तु नैवम्। 'पद्मेन तुल्यं मुखम्' इत्यादावुपमेये, 'पद्मं तुल्यं मुखस्य' इत्यादावुपमाने, 'मुखं पद्मं च तुल्यम्' इत्यादावुभयत्रापि सामान्यतस्तुल्यत्वं बोधयित्वा विश्रान्तेषु तेषु धर्मविशेषं विना कथं तुल्यतेति प्रतीतानुपपत्त्या धर्मविशेषसंबन्धप्रतीतेरिति।

केचित्तु—'उपमानोपमेयभावरूपसंबन्धस्य श्रौतार्थत्वाभ्यां विशेषः' इति व्याचक्रुस्तदयुक्तम्। 'साधर्म्यस्यार्थत्वात्तुल्यादिपदोपादाने आर्थी' इति प्रकाशविरोधात्। यस्यैव ह्यार्थतया उपमाया आर्थत्वं तस्यैव श्रौततया श्रौतत्वौचित्यात्। किं च साधर्म्यमेवोपमेति तस्यैव श्रौतत्वार्थत्वाभ्यामुपमाभेदो युक्तः। अत एव 'यथादिना सादृश्यरूपः संबन्ध एव साक्षादभिधीयते षष्ठीवत्, तुल्यादिभिस्तु धर्म्यपि' इति व्याख्यानमनुपादेयम्। ननु तथाप्यनुपपन्नो विभागः। पूर्णायां द्योतकोपमानयोरेव हि समासः संभावितः। न च यथादिभिः

---

विभक्तिकतैव। ये त्वत्र चंद्रसादृश्यप्रयोजको मुखकर्तृक आल्हाद इति बोधं वदंति तेषां तयोः समानविभक्तिकत्वनियमे मानं चिंत्यम्। यत्तु वाचनिकी समानविभक्तिकतेति। तन्न। व्याकरणे तादृशवचनानुपलंभात्। एवं गज इव गच्छति देवदत्त इत्यादौ बोध्यम्। वनगज इव शूरः समरभूमिं गच्छतीत्यादावुपमानगजकर्तृकवनगमनाभिन्नमुपमेयशूरकर्तृकं समरकर्मकं गमनमिति बोधः। साधारणधर्मरूपगमनस्य विधेयतयोपमाविधेयिकाऽत्र धीः। व्याघ्र इव यः पुरुषः स गच्छतीत्यादावुपमानशूरव्याघ्राभिन्नपुरुषकर्तृकगमनमिति धीः। (र)त्वादिसाधारणधर्मस्योद्देश्यतयोपमोद्देश्यिकाऽत्र धीः। अत एव भेदाभेदप्रधा(नो)पमेति प्रांचः। यद्यपि चंद्रमुखयोस्तत्त्वेन भेदस्तथापि साधारणधर्मवत्त्वेनाभे(दा)न्वययोग्यता बोध्येत्यधिकं मंजूषायां द्रष्टव्यम्। **धर्मविशेषसंबंधएवेति**। (त)स्य शक्त्या स्वसामर्थ्येन बोधनं तदन्वयतात्पर्यग्राहकतया बोध्यम्। तत्कृतो(प)मानत्वस्य तु द्योतका इति बोध्यम्। **तुल्यादिशब्दास्त्विवति**। ते च सदृशवाचकाः। सादृश्यं च साधारणधर्मप्रयोज्यो धर्मविशेष इत्याहुः। न चेदृशश्रौत्यार्थीविवेको विफलः। आर्थ्यामुपमानोपमेयनिर्णयविलंबेनास्वादविलंबः, तदभावः श्रौत्यामिति तत्साफल्यादिति बोध्यम्। **संबंधस्येति**। स संबंध एवेवार्थः। **अनुपादेयमिति**। धर्मबोधेऽपि यावदप्राप्तं तावद्विधीयत इति सादृश्यस्यैव विधेयत्वादित्यपि बोध्यम्। **न च यथादिभिरिति**। असादृश्ये

" इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च " इति नित्यसमासे इवशब्दयोगे समासगा ।

क्रमेणोदाहरणम् ।

स्वप्नेऽपि समरेषु त्वां विजयश्रीर्न मुञ्चति ।
प्रभावप्रभवं कान्तं स्वाधीनपतिका यथा ॥ १ ॥

चकितहरिणलोललोचनायाः क्रुधि तरुणारुणतारहारिकान्ति ।
सरसिजमिदमाननं च तस्याः सममिति चेतसि संमदं विधत्ते ॥ २ ॥

---

सममसौ दृश्यते येन समासे श्रौती स्यादिति चेत्, न । ' इवेन नित्यसमासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ' इत्यनेनेवशब्देन समं समासविभक्त्यलोपयोः संभवात् । विभक्त्यलोपदर्शनाच्च तत्रासमासव्यवहारो मूढानाम् । तत्र वाक्ये श्रौती यथा—**स्वप्नेऽपीति** ।

अत्र विजयश्रीरुपमेया । स्वाधीनपतिका उपमानम् । न मुञ्चतीति साधारणो धर्मः । यथेत्युपमाप्रतिपादकं विवक्षितम् । एवमग्रेऽप्यूह्यम् । न चैतेषां कयोरपि समास इति वाक्यगा श्रौती । वाक्यगा आर्थी यथा—**चकितेति**

---

एव यथाशब्देन समासविधानादिति भावः । **इवेन नित्यसमास इति** । व्याकरणे वैकल्पिकत्वांगीकाराद्वार्तिके तथाऽपाठाच्च नित्यपदप्रक्षेपोऽप्रामाणिकः। **स्वप्नेऽपीति** । वैरिभिः स्वप्नेऽपि तव विजयानुभवादित्यर्थः । प्रभावात्तपोविशेषात्प्रभव उत्पत्तिर्यस्य तमित्यर्थः। ('प्रभावस्य प्रभवं उत्पत्तिहेतुं त्वामित्यन्वयः' इति चन्द्रिका।) समरेषु न तु समरे । अत्र यत्तत्पदप्रकृतिकप्रकारवाचिथाल्प्रत्ययांतयथाशब्दादियोगे यत्द्धर्मवती स्वाधीनपतिका तद्धर्मवती विजयश्रीरिति उभयविशेष्यको बोधः। पश्चात् यत्तद्भ्यां धर्मस्यैक्यबोधात्सादृश्यं फलति । राज्ञः कांतस्य च बिंबप्रतिबिंबभावः। तदालिंगितस्वप्नाधिकरणकत्यागाभावो ऽनुगामी साधारणो धर्म इति बोध्यम् । **चकितेति** । (सखीं प्रति नायिकासौभाग्यं कयाचिन्निवेद्यते।) भीतहरिणवच्चंचलनेत्रा या इत्यर्थः। क्रुधि कोपे । तत्रापि कांतमित्याह । तरुणेति । तरुणारुणवत्तारा पुष्टा हारिणी मनोहरा कांतिर्यस्य तदिति आननविशेषणम् । संमदं हर्षम्। (पुष्पिताग्रा छंदः।) सरसिजमाननं च सममित्यत्र प्रथमं सादृश्यवदभिन्नमिदं द्वयमिति बोधे पश्चान्मनसा व्यंजनया वा परस्परनिरूपितसाधारणधर्मप्रतीतिरिति ध्येयम् । अ-

अत्यायतैर्नियमकारिभिरुद्धतानां
दिव्यैःप्रभाभिरनपायमयैरुपायैः ।
शौरिर्भुजैरिव चतुर्भिरदः सदा यो
लक्ष्मीविलासभवनैर्भुवनं बभार ॥ ३ ॥

अवितथमनोरथपथप्रथनेषु प्रगुणगरिमगीतश्रीः ।
सुरतरुसदृशः स भवानभिलषणीयः क्षितीश्वर न कस्य ॥४॥

गाम्भीर्यगरिमा तस्य सत्यं गङ्गाभुजंगवत् ।
दुरालोकः स समरे निदाघाम्बररत्नवत् ॥ ५ ॥

---

इयं समशब्दप्रयोगादार्थी । समासे श्रौती यथा—**अत्यायतैरिति।** अत्रेवेन समासः । समासे आर्थी यथा—**अवितथेति ।** अत्र सुरतरुसदृश इत्युपमानद्योतकयोः समासः । तद्धिते श्रौत्यार्थी च यथा—**गाम्भीर्येति ।** अत्र गङ्गाभुजंगवदिति श्रौती । 'तत्र तस्येव' इत्यनेन इवार्थे वतेर्विधानात् । निदाघाम्बररत्नवदित्यार्थी । 'तेन तुल्यम्–' इत्यर्थे वतेः प्रयोगात् ।

---

ःणसदृशकांतिमत्त्वं साधारणो धर्मः । **अत्यायतैरिति** । आयतिः ( आय- ा ) उदर्कशुद्धिर्दीर्घता च । उद्धतानां गर्ववतां दानवानां च । दिव्यैरुत्कृष्टैः वर्गीयैश्च । प्रभाभिः । प्रकृष्टशोभावद्भिः । भातेः कर्तरि क्विप् । अनपायमयैः ापायाभावप्रचुरैः । उपायैः सामभेददानविग्रहैः । अदः एतत् भुवनम् लक्ष्मीः संपच्च । ( वसंततिलका छन्दः । ) [3]भुजैरिवोपायैरित्यत्र भुजसादृश्यप्रकात्यायतत्वादिधर्मवद्भिरित्यादिरेव बोधः । गजो वनं गच्छतीव शूरः गच्छतीत्यादौ क्रियासमभिव्याहृतेवादेरुत्प्रेक्षाद्योतकत्वमेवेति न ारः । स्पष्टं चेदं सन्विधायके भाष्ये । **अवितथेति ।** अव्यर्थवांाविषयसंबंधिमार्गसंपादनेषु प्रकृष्टगुणानां गरिम्णा गीता श्रीर्यस्य । ( गीः ।) **द्योतकयोरिति** । द्योतकपदं बोधकपरम् । **गांभीर्येति** । गांभीर्य ःकरणत्वं अतलस्पर्शित्वं च । भुजंग उपपतिः समुद्रः । शंतनोरेव तित्वात् । दुरालोकः दुःखेनालोकयितुं शक्यः । अंबररत्नं सूर्यः । अत्र

---

१ प्र. विनय° । २ प्र. °कश्च ।

३ भुजैरित्यारभ्य बोध इत्यंतः पाठः ( ख ) पुस्तके नोपलभ्यते ।

स्वाधीनपतिका कान्तं भजमाना यथा लोकोत्तरचमत्कारभूः, तथा, जयश्रीस्त्वदासेवनेनेत्यादिना प्रतीयमानेन विना यद्यपि नोक्तेर्वैचित्र्यम्, वैचित्र्यं चालंकारः, तथाऽपि न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारः, न खलु व्यङ्ग्यसंस्पर्शपरामर्शादत्र चारुताप्रतीतिः, अपि तु वाच्यवैचित्र्यप्रतिभासादेव। रसादिस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैव तदलंकारा उदाहृताः। तद्रहितत्वेन

---

ननु चित्रभेदा अलंकारनिर्णये निर्णेष्यन्ते इति पूर्वमवादीः, इदानीं 'स्वप्नेऽपि' इत्युदाहरसि, न तच्चित्रं भवितुमर्हति। अत्र हि स्वाधीनभर्तृका कान्तं भजमाना यथा चमत्कारभूस्तथा जयश्रीस्त्वदासेवनेनेत्यादि वस्तुरूपं व्यङ्ग्यं विना नोक्तेर्वैचित्र्यम्। वैचित्र्यं चालंकारत्वनिष्पत्तय इति व्यङ्ग्यमवश्यापेक्षणीयम्। अतस्तस्य प्राधान्ये ध्वनित्वम्। अप्राधान्ये गुणीभूतव्यङ्ग्यत्वम्। तस्मात्पूर्वापर-

---

बोध उक्तदिशोह्यः। उत्तरत्र निदाघांबररत्नतुल्याभिन्नो दुरालोक इति बोधः। तुल्यत्वप्रयोजकं च दुरालोकत्वमिति पश्चान्मनसा व्यंजनया वा बुध्यते। स चेत्थम्। उपमानदुरालोकनिदाघांबररत्नाभिन्नो दुरालोको राजेत्येवमिति बहवः। अत एवार्थीत्वम्। नामार्थयोरभेदान्वयस्यैतद्विग्रहवाक्ये क्लृप्तनिर्वाहाय अस्य वतेरपि धर्मिवाचकतैवोचिता। अनुशासनस्य तथैव शक्तिग्राहकत्वाच्च क्रिययोस्तुल्यत्व एव तेन तुल्यमिति वतिः साधुः। अत एव ब्राह्मणवदधीत इत्यत्र ब्राह्मणपदस्य तत्कर्तृकाध्ययने लक्षणेति भाष्यकृतः। एवं च चंद्रवन्मुखमित्यादौ भवतिक्रियामध्याहृत्य चंद्रभवनसदृशं मुखभवनमित्येव वाच्योर्थः। चंद्रमुखयोः सादृश्यं तु व्यंजनयैवेति[१] बोध्यम्। गंगाभुजंगवदित्यत्र गंगाभुजंगपदस्य तत्संबंधिगांभीर्यगरिमलक्षकत्वेन गंगाभुजंगसंबंधिगांभीर्यसदृशमेतत्संबंधिगांभीर्यमितिबोधः। तदनंतरं गांभीर्ययोः सादृश्यमूलाभेदाध्यवसायेनाभिन्नधर्ममूला पश्चात् गंगाभुजंगराज्ञोरुपमाप्रतीतिः। गंगाभुजंगस्येवास्य गांभीर्यगरिमेत्यादिवाक्येषष्ठ्युपपत्तये गांभीर्यगरिमेत्यस्यावृत्त्या गंगाभुजंगेप्यन्वयेन तादृशबोधस्यैवानुभवेन वृत्तावपि तथैवौचित्यात्। एवमरविंदतुल्यो भातीत्यस्यारविंदतुल्यकर्तृकं भानमिति वाच्योर्थः। भानमेव च साधारणो धर्मः। एवं चोपमाविधेयिका धीः।' यदा तु धर्मांतरेण तुल्यत्वं तदोपमाया उद्देश्यतावच्छेदकत्वमिति दिक्।

---

१ (ख) व बुध्यत इति

॰ तु उदाह्रियमाणा विरसतामावहन्तीति पूर्वापरविरुद्धाभिधान मिति न चोदनीयम् ।

**तद्वद्धर्मस्य लोपे स्यान्न श्रौती तद्धिते पुनः ।**

---

वेरुद्धाभिधानमिति चेत्, मैवं वादीः । न खलु व्यङ्ग्यपरामर्शादेवात्र चारुताप्रतीतिः, अपि तु वाच्योपमामात्रपरामर्शादेव । चारुत्वहेतुश्चालंकारः । अवर्जनीयसंनिधेश्च व्यङ्ग्यस्यास्फुटतरतया न ध्वनिगुणीभूतव्यङ्ग्यव्यवहारप्रवर्तकेति न कश्चिद्दोषः । नन्वेवमप्युदाहृते रसादिरूपव्यङ्ग्यसद्भावाच्चित्रतानुपपत्तिः । कें चानुप्रासाद्यलंकारान्तरसद्भावात्संकरालंकारोदाहरणान्येतानि युक्तानि, न ; शुद्धाया उपमाया इति चेत्, न । रसादिरूपव्यङ्ग्योऽलंकारान्तरं चैतेष्वव्यभिचारीति तत्रौदासीन्यमालम्ब्योपमालंकारोऽयमीदृश इत्यभिप्रायेणालंकारात्रमु[illegible]तं न तु चित्रकाव्यम् । अत्र ' चन्द्रधवलः पटः ' इत्यादिको र-ालंकाराभ्यामसंभिन्न एव विषयः किमिति नोदाह्रियत इति चेत्, तद्रहितत्वेोदाहरणे वैरस्यप्रसङ्गात् । तादृशवाक्यस्याकाव्यत्वेन तस्या अप्यनुपमात्वात् । अथ लुप्ता विभजनीया । सा च सप्तधा । तत्रैकस्य लोपे त्रिधा । उपमास्य साधारणधर्मस्य द्योतकस्य च लोपात् । उपमेयमात्रस्य लोपादर्शनात् । द्विलोपेऽपि त्रिधा । धर्मवाद्योर्धर्मोपमानयोर्वाद्युपमेययोश्च लोपात् । अन्यस्य द्वि-स्य लोपासंभवात् । त्रिलोपे त्वियमेका । उपमेयं विनान्येषामेकैकमात्रसत्त्वे पमाया असंभवादिति दर्शयन्नेव यथासंभवं तासां सप्तविधानामपि विभाग-ाह—**तद्वदिति** ।

---

**खलु व्यंग्येति** । सत्यपि व्यंग्ये समुत्कटयालंकारकृतचारुतया प्रथमचित्ताकर्षणादिति भावः । विद्यमानव्यंग्यस्य ध्वन्यादिप्रयोजकता नेत्याह **र्जनीयेति । अस्फुटतरतयेति** । अत्रालंकारवैचित्र्यप्रतीतिव्यवहितप्र-ाऽस्फुटतरत्वम् । यत्र वाच्यप्रतीत्यव्यवधानेन व्यंग्यप्रतीतिस्तत्र भावः । अस्फुटतरातिरिक्तव्यंग्यराहित्येनाव्यंग्यत्वमत्रेति रहस्य-. **नन्वेवमिति** । राजविषयरतिभावस्य भकारानुप्रासस्य च स्वप्नेपीति पद्ये त्वादित्याशयः । **तस्या अप्यनुपमात्वादिति** । उपमालंकारत्वाभावादित्यर्थः । चकवाच्योपस्कारद्वारा रसाद्युपकारकस्यैवालंकारत्वादिति भावः । नीरसेपि वैचित्र्येणापाततश्चमत्कारमात्रं नत्वलंकारत्वमिति तात्पर्यम् । **एकस्य लो-इति** । लोपोत्रानुपादानम् । ननु चंद्रत्वमुखत्वादिधर्मप्रतीतेर्न धर्मलोप इत्यत

**धर्मः साधारणः । तद्धिते कल्पबादौ त्वार्थ्येव । तेन पञ्च ।**

**उदाहरणम्,**

**धन्यस्यानन्यसामान्यसौजन्योत्कर्षशालिनः ।**
**करणीयं वचश्चेतः सत्यं तस्यामृतं यथा ॥ ६ ॥**
**आकृष्टकरवालोऽसौ संपराये परिभ्रमन् ।**
**प्रत्यर्थिसेनया दृष्टः कृतान्तेन समः प्रभुः ॥ ७ ॥**
**करवाल इवाचारस्तस्य वागमृतोपमा ।**
**विषकल्पं मनो वेत्सि यदि जीवसि तत्सखे ॥ ८ ॥**

---

धर्मस्य साधारणस्य । तद्वत्समासे वाक्ये तद्धिते च श्रौती आर्थी चेत्यर्थः। तत्र विशेषमाह—'न श्रौती तद्धित–' इति। इवार्थ एव हि तद्धिते सा श्रौती भवेत् । इवार्थश्च वतिरेव । स च ' तत्र तस्येव ' इत्यर्थकतया नित्यं धर्मसाकाङ्क्ष इति धर्मानुपादाने श्रौती तद्धिते न भवत्येव । आर्थी तु यद्यपि वतिरूपे तद्धिते न संभवति ' तेन तुल्यम्–' इत्यर्थे उक्तन्यायेन नित्यं तुल्यक्रियाकाङ्क्षत्वेन धर्मलोपे तदसंभवात् । तथापि कल्पप्-देश्य-देशीयर्-बहुच्-रूपे संभवत्येवेति पञ्चधा धर्मलोपोपमेत्यर्थः । तत्र वाक्ये श्रौती यथा—**धन्यस्येति ।**

अत्रामृतवचसोः परिणामसुरसत्वादिसाधर्म्यं, तच्च नोपात्तम् । आक्षेपात्तु लब्धस्य संबन्धो यथाशब्देन तद्बोधं विनाऽपर्याप्तेन श्रुत्यैव बोध्यत इति धर्मलोपे श्रौतीयम् । एवमग्रेऽप्यूह्यम् । वाक्ये आर्थी यथा—**आकृष्टेति ।**

आकृष्टकरवालत्वं च न साधारणो धर्मः । यमस्य दण्डायुधत्वेन प्रसिद्धेः ।

अन्यत्रयं यथा—**करवाल इवेति ।**

---

आह । **साधारणस्येति** । **नित्यं धर्मेति** । इवस्य साधारणधर्मसंबंधे[1] शक्तेस्तदुपादानं विना तदर्थबोधाभावात् । किंच षष्ठीसप्तम्यंतात्तद्विधानेन षष्ठ्याद्यर्थस्य धर्मोपादानं विनाऽन्वयासंभवादिति भावः। **धर्मलोपे तदसंभवादिति ।** इदमपि व्यंग्योपमामादायैव ? । **धन्यस्येति** । अनन्यसामान्यस्येति (न विद्यते अन्यत् सामान्यं सादृश्यं यस्य इति) बहुव्रीहिः । चेत इति संबोधनम् । **आकृष्टेति** । (करवालः खड्गः ।) संपराये युद्धे । प्रत्यर्थिसेनया शत्रुसेनया । कृतांतो यमः । क्रूरत्वमत्र साधारणो धर्मः । **करवाल इवेति** । (तत् तदा ।

---

१ ( ख ) ध बोधकत्वेन

**उपमानानुपादाने वाक्यगाथ समासगा ॥ ९ ॥**

**सअलकरणपरवीसामसिरिविअरणं ण सरसकव्वस्स ।**
**दीसइ अहवणिसम्मइ सरिसं अंसंसमेत्तेण ॥ ९ ॥**

**कव्वस्सेत्यत्र कव्वसममिति, सरिसमित्यत्र च णूणमिति पाठे एषैव समासगा ॥**

---

अत्र करवाल इवेति समासे श्रौती । अमृतोपमेति समासे आर्थी । विषकल्पमिति तद्धितगा आर्थी । **उपमानेति ।**

अत्र तद्धितगा न संभवति । उपमाप्रतिपादकस्य तद्धितस्य वतिकल्पबादेरुपमानादेव विधानेन उपमानानुपादानेऽसंभवात् । न वा श्रौती । इवादीनामुपमानमात्रान्विततया तदनुपादाने तेषामप्यनुपादानात् । अतो वाक्यसमासयोरेव । तयोरप्यार्थ्येवेति द्विप्रकारा लुप्तोपमानोपमा । तत्र वाक्यगा यथा—**सअलेति ।**

अत्र विशेषत उपमानं नोपात्तम् । चिन्त्यमेतत् । इदमेव 'कव्वस्स' इत्यत्र 'कव्वसमम्,' 'सरिसं' इत्यत्र 'णूणं' इतिपाठे समासगोदाहरणम् ।

---

यदि वेत्सि तर्हि जीवसीत्यन्वयः। अथ वा यदि जीवसि तर्हि वेत्सि इत्यन्वयः। तत्समीपावस्थानेतवजीवनमेव दुर्लभमिति भावः ।) अत्र घातकत्वमाधुर्यनाशकत्वानि क्रमेण साधारणा धर्माः। उपमाशब्दस्य सदृशमात्रवाचकत्वेपि साधारणधर्मसंबंधे नित्यसाकांक्षत्वाभावाच्छक्तत्वाभावाद्वार्थीत्वम् । **विषकल्पमिति ।** ईषदसमाप्तौ विधीयमानस्य कल्पपः सादृश्ये पर्यवसानादिति भावः। **उपमानमात्रान्विततयेति**। उपमानानंतर्यनियमेनेत्यर्थः । **स अलेति ।** सक[illegible]रणपरविश्रामश्रीवितरणं न सरसकाव्यस्य। दृश्यतेऽथवा निशाम्यते सदृशमंशांशमात्रेण। **अपि**रत्र गम्यः । करणं चक्षुरादि । परविश्रामो विपयांतरवैमुख्यम् । तज्जन्यशोभादात्रित्यर्थः । ( आर्या मुखविपुला।) **अत्र विशेषत इति ।** अत्रास्मद्दर्शनश्रवणाविषयत्वेन दुर्लभतयोत्कृष्टगुणं अस्मदगोचरं किंचिदुपमानं भविष्यतीति सादृश्यपर्यवसानादुपमानलुप्तोपमैवेयम् । एतेनासमालंकारोयमुपमातिरिक्त इति रत्नाकराद्युक्तमपास्तम् । अत एवोपमानानुपादानइत्युक्तम् नत्वसत्व इति । वस्त्वंतरस्य विशिष्यानुपादानमात्रेणोपमानलोपव्यवहारः । एतेनाऽन्वयोऽत्रेत्यप्यपास्तम् । अनन्वये उपमानासत्वस्यैव विवक्षितत्वात् । **चिंत्यमेतदिति ।** तद्बीजं तु काव्यमेवात्रोपमानम् । चंद्रस्य सदृशं मुखमित्यादौ चंद्रस्यै-

**वादेर्लोपे समासे सा कर्माधारक्यचि क्यङि ।**
**कर्मकर्त्रोर्णमुलि,**

वाशब्दः उपमाद्योतक इति वादेरुपमाप्रतिपादकस्य लोपे षट्,—समासेन, कर्मणोऽधिकरणाच्चोत्पन्नेन क्यचा, कर्तुः क्यङा, कर्मकर्त्रोरुपपदयोर्णमुला च भवेत् ।

उदाहरणम्,—

ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलंकृता ॥ १० ॥

तथा

असितभुजगभीषणासिपत्रो रुहरुहिकाहितचित्ततूर्णचारः ।
पुलकिततनुरुत्कपोलकान्तिः प्रतिभटविक्रमदर्शनेऽयमासीत् ॥११॥

---

द्योतकलोपे वाक्यगा तावन्न संभवति । 'मुखं चन्द्रो रमणीयम्' एतावन्मात्रेणोपमाप्रत्ययाभावात् । नापि तद्धितगा । वतेः कल्पबादीनां च द्योतकतया तत्प्रयोगे द्योतकलोपस्यैवासंभवात् । न वा श्रौतीत्यन्यथा विभजते—**वादेरिति ।**

वाशब्द उपमाद्योतक इति वादेरुपमाद्योतकस्येत्यर्थः । तस्य लोपे समासे क्यचि क्यङि णमुलि चोपमा । तत्र क्यचि द्विधा । कर्मणोऽधिकरणाच्च विधानेन तस्य द्वैविध्यात् । क्यङि त्वेकैव । कर्तुरेव तद्विधानात् । णमुल्यपि द्विधा । कर्मकर्त्रोस्तद्विधानात् । तत्र समासे द्विधा । द्वयोस्त्रयाणामपि वा उपमानादिपदानां समासात् । तयोराद्या यथा—**तत इति ।**

अत्र गण्डपाण्डुनेति द्वयोः समासः । द्वितीया यथा—**असितेति ।**

---

वोपमानतावगमात् । एवं चोपमेयलोप इति वक्तुमुचितमिति । उद्धारस्तु काव्यस्य सममित्यस्य काव्यनिष्ठसादृश्यप्रतियोगीत्यर्थः । काव्यस्यवर्णनीयतयोत्कर्षायोपमेयस्य विवक्षितत्वादित्याहुः । **तद्विधानादिति** । एवं च सादृश्यबोधकवादिलोपे षड्विधेत्यर्थः । **तत इति** । (महाभारते द्रोणपर्वणि रात्रियुद्धे १८४ अध्याये चन्द्रोदयवर्णनम् ।) कुमुदनाथत्वं तद्विकासित्वात् । गंड इव पांडुरिति उपमानानीति समासः । नेत्रानंदेन तज्जनकेन । माहेंद्री प्राची । **असितेति** । असितभुजगस्तीक्ष्णविषः सर्पजातिभेदः । तद्वद्भीषणस्तीक्ष्णधारत्वादसि-

पौरं सुतीयति जनं समरान्तरेऽसा-
वन्तःपुरीयति विचित्रचरित्रचुञ्चुः।
नारीयते समरसीम्नि कृपाणपाणे-
रालोक्य तस्य चरितानि सपत्नसेना ॥ १२ ॥
मृधे निदाघघर्मांशुदर्शं पश्यन्ति तं परे।
स पुनः पार्थसंचारं संचरत्यवनीपतिः ॥ १३ ॥

अत्रासितभुजगेत्यादावुपमानधर्मोपमेयशब्दानां त्रयाणामपि समासः। क्यच्क्यङोर्भेदत्रयं यथा—**पौरमिति**।
अत्र पौरं सुतीयतीत्यत्र 'उपमानादाचारे' इति कर्मणः क्यच्। समराऽन्तःपुरीयतीत्यत्र तु 'अधिकरणाच्च' इत्यनेनाधिकरणात्। नारीयते इति : क्यङ् सलोपश्च' इत्यनेन कर्तुः क्यङ्। णमुलि भेदद्वयं यथा—**मृधे**।
अत्र निदाघघर्मांशुदर्शमिति कर्मणि णमुल्। निदाघघर्मांशुमिव पश्यन्ती-। पार्थसंचारमित्यत्र कर्तरि। 'उपमाने कर्मणि च' इति सूत्रे चकारात्।

पत्रं यस्य सः। रुहरुहिका रभसोत्कंठा तदाहिताश्चित्र आश्चर्यभूतस्तूर्णस्त्वरिधारो गमनं यस्य सः।उद्गतकपोलशोभः।(पुष्पिताग्राछंदः।)यत्तु पूर्वोदाहरणे उपनानीति समासात् श्रौती, अत्र त्वसितभुजगवद्भीषण इति मध्यमपदलोपिसमादार्थीति भेदमाहुः। तन्न। विनिगमनाविरहात्। **पौरं सुतीयति इति**। पौरं गरजनं सुतमिवाचरतीत्यर्थे उपमानादाचार इति क्यच्। उपमानवाचकात्कम आचारेऽर्थेक्यजिति सूत्रार्थः। उपमानादित्यनेन इवार्थस्य वृत्तौ प्रवेशः चितः। अत्राचारः स्नेहपालनादिरूपः। एवं चोपमानभूतसुतकर्मकाचाराभि: पौरकर्मकाचार इति बोधः। एवमंतःपुर इवाचरतीत्यर्थकांतःपुरीयतीत्यत्राबोध ऊह्यः। अत्राचारः स्वच्छंदगमनादिः। विचित्रेति। विचित्रचरित्रैर्वित्त र्थः। तेन वित्तश्चुंचुप्चणपाविति चुंचुप्रत्ययः। नारीवाचरति नारीयते। तुः क्यङ्। आचारोऽत्र विनयादिः। (वसन्ततिलका छन्दः।) अत्र सादृरसदृशैतन्मात्रबोधकाभावात् वाचकलुप्ता बोध्या। यत्तु सुतपदस्य सुतसादृश्यत्वेपि सादृश्यवाचकाभावाद्वाचकलुप्तेति। तन्न। चंद्रप्रतिपक्षमाननमित्यादावपि चकलुप्तापत्तेः। **मृधे इति**। रणे इत्यर्थः। (परे। शत्रवः। निदाघघर्मांशुदर्शं श्यन्ति। ग्रीष्मसम्बन्धिसूर्यमिव पश्यन्तीत्यर्थः। पार्थसंचारं संचरति। पार्थ

**एतद्विलोपे क्विप्समासगा ॥ ३ ॥**

एतयोर्धर्मवाद्योः । उदाहरणम्,—

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्य
यामिनयन्ति दिनानि च सुखदुःखवशीकृते मनसि ॥१४॥
परिपन्थिमनोराज्यशतैरपि दुराक्रमः ।
संपरायप्रवृत्तोऽसौ राजते राजकुञ्जरः ॥ १५ ॥

**धर्मोपमानयोर्लोपे वृत्तौ वाक्ये च दृश्यते**

---

अथ द्विर्लोपे विभजनीया । तत्र धर्मवाद्योर्लोपे वाक्यगा न संभवति । शिष्टयोर्मुखं चन्द्र इत्येतावन्मात्रयोरुपादाने उपमाऽनवगमात् । नापि तद्धितग तद्धितस्यापि कल्पबादित्वेन तत्सत्त्वे द्विलोपाभावात् । नापि श्रौती । इवाभावादित्यन्यथा विभजते—**एतदिति** ।

एतद्विलोपे एतयोर्द्वयोधर्मवाद्योर्लोपे । क्विब्गा यथा—**सवितेति** ।

यद्यप्याचारे क्विब्विधानात्तस्यैव च समानधर्मरूपत्वेन क्विपि धर्मलोपो नास्ति तथापि क्विप एव लोपाद्धर्मलोपव्यवहारः । अत एव समानार्थत्वेऽपि क्यङत्र नोपात्तः । तस्यालुप्तत्वेन धर्मलोपाभावात् । समासगा यथा—**परिपन्थीति** ।

अत्र राजायं कुञ्जर इवेत्युपमा । **धर्मेति** ।

---

इव संचरतीत्यर्थः ।) णमुल्प्रकृतिः साधुत्वमात्रार्था । णमुलर्थो भावः । अव्ययकृतां भावे एव विधानात् । तस्मात् कर्मणोरेव कर्त्रोरेव चोपमानोपमेयभाव इति लुप्तोपमैवेयं इति । **सवितेति** । सुखिते मनसि सूर्यश्चंद्रसदृशः । आल्हादकत्वात् । दुःखिते चंद्रः सूर्यसदृशः । दुःखदत्वात् । एवमुत्तरत्र । ( विधवति । विधुरिवाचरति । सवितरति । सवितेवाचरति । दिनन्ति । दिनानीवाचरन्ति । यामिनयन्ति । यामिन्य इवाचरन्ति । आर्या छन्दः ।) **क्विप एवेति** । यद्यपि क्विप्प्रकृतेः कर्तृभूतस्यसादृश्यप्रयोजकाचारलक्षणेति कथं धर्मलोपः । तथापि तन्मात्रबोधकाभावाल्लोपव्यवहारः । **परिपंथीति** । शत्रुमनोराज्यैरपीत्यर्थः । साक्षात्दुराक्रम एवेति किं वक्तव्यमिति भावः । संपरायो युद्धम् । **राजाकुंजर इवेति** । उपमितं व्याघ्रादिभिरिति समासः । दुराधर्षत्वस्य समानधर्मस्य प्रसिद्धत्वात् न न्यूनपदत्वम् । औपम्यं समासगम्यम् । अत्र रूपकं

ढुण्ढुण्णंन्त मरीहसि कण्टअकलिआइं केअइवणाइं ।
मालइकुसुमसरिच्छं भमर भमन्तो ण पाविहिसि ॥ १६ ॥

कुसुमेण सममिति पाठे वाक्यगा ।

**क्यचि वाद्युपमेयासे**

आसे निरासे ।

अरातिविक्रमालोकविकस्वरविलोचनः ।
कृपाणोदग्रदोर्दण्डः ससहस्रायुधीयति ॥ १७ ॥

अत्रात्मा उपमेयः ।

---

तद्धिते तु नेयम् । उपमानलोपे तद्धितस्यैवाभावात् । नापि श्रौती । उपमानाप्रयोगे इवादेरप्रयोगात् । तत्र समासगा यथा—**ढुंढुल्लन्त इति** ।

कुसुमसरिच्छमित्यत्र 'कुसुमेण समं' इति पाठे इयमेव वाक्यगा—

**क्यचीति** :

आसे निरासे । उदाहरणम्—**अरातीति** ।

अत्र यद्यपि विशेषणद्वारोपात्तः कर्तैवोपमेयस्तथापि न तथात्वेन, किं तु कर्मत्वेन । अन्यथा क्यचोऽसंगतत्वापत्तेः । तथा चात्मानं सहस्रारायुधी-

---

तु न । मनोराज्यशतैरित्यादेरनन्वयादित्याहुः । **ढुंढुलंतोइति** । ढुंढुलायमानो भ्रमिष्यसि कंटककलितानि केतकीवनानि । मालतीकुसुमसदृशं भ्रमर भ्रमन्नपि न प्राप्स्यसि । ढुंढुलायमानः अन्वेषमाणइत्यर्थः । एकाकारशब्देन प्रार्थयन्नित्यर्थ इत्यन्ये । काचित् सौभाग्यमात्मनः सूचयंती प्रियसन्निधौ भ्रमरं प्रत्येवमाह । (गाथाछन्दः ।) अत्र प्रकृतत्वान्मालतीउपमेया । कुसुमांतरस्याप्राप्त्युपदेशेन त्वदन्यमुत्कृष्टगुणमस्योपमानमिति प्रतीतेरस्त्युपमितिक्रियानिष्पत्तिरिति बोध्यम् । **क्यचीति** । विषयसप्तमी । **निरास इति** । वाद्युपमेययोर्लोपे इत्यर्थः । **अरातीति** । मदग्रेपि वैरिविक्रम इति नयनविकासः । कृपाणेनोदग्रो दीर्घो बाहुर्यस्य सः । सहस्रमायुधानि यस्य तमिवात्मानमाचरतीति कर्मणि क्यच् । आयुधसहस्रनिर्वाह्यस्य प्रतिपक्षोत्सारणस्यैकेन कृपाणेन निर्वाहाद्वीरोत्कर्षः । सहस्रारायुधीयतीति पाठे सहस्रारं चक्रमायुधमस्य विष्णोस्तमिवाचरतीत्यर्थः । **विशेषणद्वारेति** । सहस्रायुधीयतीति पाठे इदम् । ससहस्रायुधीयतीति पाठे साक्षादुपात्त इति बोध्यम् । **अन्यथा क्यच इति** । इच्छाक्यच्-

१ प्र. सहस्रारायुधीयति

**त्रिलोपे च समासगा ॥ ४ ॥**

त्रयाणां वादिधर्मोपमानानाम्। उदाहरणम्,—

तरुणिमनि कृतावलोकना ललितविलासवितीर्णविग्रहा।
स्मरशरविसराचितान्तरा मृगनयना हरते मुनेर्मनः ॥ १८ ॥

अत्र सप्तम्युपमानेत्यादिना यदा समासलोपौ भवतः, तदेदमुदाहरणम्। क्रूरस्याचारस्यायःशूलतयाऽध्यवसायात्, अयःशूलेनान्विच्छति 'आयःशूलिकः'—इत्यतिशयोक्तिर्न तु क्रूराचारोपमेय- -तै

---

यतीत्यर्थः इत्युपमेय आत्मा लुप्त इति यथोक्तोदाहरणमेतत्। हंसायत इत्यादौ कर्तैवोपमेयः। तस्य चानुपादाने वाक्यमेव न पर्याप्यत इति विशेषात् क्यङि नेयं संभवति। यद्यपि द्विलोपेऽन्यदपि भेदत्रयं संभवति। यथा उपमानोपमेययोः, उपमानवाद्योः, उपमानधर्मयोरिति। तथापि तेषूपमायाः प्रसङ्ग एव नास्तीति न न्यूनत्वमाशङ्कनीयम्।

त्रिलोपे तूपमेयातिरिक्तत्रितयलोप एव संभवतीत्युक्तम्। सापि समासमात्रे। अन्यत्र बोधकाभावात्। तत्रार्थ्येव इवादेर्लोपात्, इत्येकविधैवेत्याह—**त्रिलोप इति।**

यथा—**तरुणिमनीति।**

अत्र यदि मृगशब्देन लक्षणया तल्लोचने विवक्ष्येते तदा नेदमुदाहरणम्। यदा तु मृगलोचने इव नयने यस्या इत्यर्थो विवक्ष्यते तदा 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिरुत्तरपदलोपश्च' इत्यनेन मृगलोचनेत्युपमानपूर्वपदस्य नयनशब्देन बहुव्रीहावुपमानवाचिनि मृगलोचने इति पूर्वपदे उत्तरपदभूतस्य लोचनशब्दस्य लोपे उपमेयभूतस्य नयनमात्रस्योपादानादिदमुदाहरणम्।

केचित्तु "उपमानमात्रोपादानेऽपि त्रिलोपा संभवति। यथा 'अयमायः-

---

तु नायम्। अरातीत्यादिविशेषणासामंजस्यात्। तथापीत्यतःप्राक् उपमेयधर्मयोरिति पाठः। उपमानधर्मयोरिति पाठस्त्वयुक्तः। तल्लोपेनुपदमेव ढुंढुल्लंत इत्यस्योदाहरणात्। **तरुणिमनीति।** तरुणिमनि सति मृगनयना मुनेः मनो नयते हरतीत्यन्वयः। ललिताय विलासाय च विताणोर्दत्तो विग्रहः शरीरं यया। स्मरशीर्णीकृतमांतरं यस्याः सा (अपरवक्त्रं छन्दः।) **नेदमुदाहरणमिति।**

---

१ झ. प्र. तीर्ण। २ ज. प्र. नयते।

**क्ष्ण्यधर्म-वादीनां लोपे त्रिलोपेयमुपमा । एवमेकोनविंशतिर्लुप्ताः पूर्णाभिः सह पञ्चविंशतिः ।**

---

शूलिकः ' इति । अत्रायःशूलपदेन क्रूर आचार उपमेयः । तीक्ष्णत्वादिकं च साधारणो धर्मः । न च तयोरेकमप्युपात्तम् । नापीवादिः " इति मन्यन्ते । तन्न युक्तम् । यतः क्रूरस्याचारस्यायःशूलतयाध्यवसानादतिशयोक्तिरियं न तूपमा । अन्यथाऽध्यवसानमूलातिशयोक्तेर्निर्विषयत्वापत्तेः ।

तदेवं धर्मलोपे पञ्च । उपमानलोपे द्वौ । द्योतकलोपे षट् । धर्मवाद्योर्लोपे द्वौ । धर्मोपमानयोर्लोपे द्वौ । द्योतकोपमेयलोपे चैकः । त्रिलोपेत्वेकः । इत्यूनविंशतिर्लुप्ताभेदाः । पूर्णभेदाश्च षट् । इत्येवं पञ्चविंशतिः ।

नन्वन्येऽप्युपमाभेदाः संभवन्ति । तथाहि—एकस्यैवोपमेयस्य बहूपमानसंबन्धो मालोपमा । सा च द्विधा—साधर्म्यस्याभेदात्तद्भेदाच्च । तत्राद्या यथा—

---

अत्र स्वमात्रबोधकपदाभावात्त्रयाणां लोपसंभवेन चिन्त्यमेतदित्याहुः । **अत्रायःशूलेति** । अयःशूलपदेनस्वार्थसदृशो लक्ष्यते इति भावः । **अतिशयोक्तिरिति** । अयःशूलशब्दादयःशूलत्वेन स्वार्थसदृशक्रूराचारलक्षकात्तेनान्विच्छतीति ठक्प्रत्यये उक्तरूपसिद्धेरिति भावः । **निर्विषयत्वापत्तेरिति** । कमलमनंमसीत्यादावपि कमलादिपदैः स्वार्थसदृशमुखादेर्लक्षणादेतत्भेदापत्तेरितिभावः । वस्तुतोयं पूर्णालुप्ताविभागो वाक्यसमासप्रत्ययविशेषगोचरतया शब्दशास्त्रव्युत्पत्तिकौशलप्रदर्शनपरत्वादत्र शास्त्रे न व्युत्पाद्यत्वमर्हति । साचेयमुपमा वस्त्वलंकारस्वरूपाणां व्यंग्यानां वस्त्वलंकारयोर्वाच्ययोश्चोपस्कारकतया ऽलंकारतां भजते । नचैवमन्यानुपस्कारकसादृश्यनिबंधने 'सच्छिन्नमूलःक्षतजेन रेणुः' 'तस्योपरिष्टात् पवनावधूतः' ' अंगारशेषस्य हुताशनस्य पूर्वोत्थितो धूम इवाबभासे ' अलंकारव्यवहारानापत्तिः । आपणे विक्रीयमाणतादृशायां ताटंकादेकाकर्णाद्यनुपस्कारकत्वेपि अलंकारव्यवहारवदुपपत्तेः । कदाप्यलंकारभावाप्य मंजूषादिगतकटकादिवत् अलंकुर्वाणगतधर्ममात्रसंस्पर्शनिबंधनत्वाच्च । एतेन यत्र सकलवाक्येन प्राधान्येन व्यंग्योपमा तत्राप्यलंकारध्वनिव्यवहारो व्याख्यातः। इयं चोपमा यथेवसदृशतुल्यादिशब्दोपादाने वाच्यालंकारः । सुहृत्प्रतिपक्षादिशब्दोपादाने लक्ष्या । **साधर्म्यस्याभेदादिति** । एकशब्दबोध्यत्वेन सर्वोपमागतत्वादित्यर्थः । **तद्भेदादिति** । प्रत्युपमानं विश्रांतेरित्यर्थः । यथा माला का-

---

१ ट. शब्देन ।

" अनयेनेव राज्यश्रीर्दैन्येनेव मनस्विता ।
मम्लौ सा च विषादेन पद्मिनीव हिमाम्भसा ॥ १९ ॥

इहाभिन्ने साधारणे धर्मे,

ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् ।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ २० ॥

इति भिन्ने च तस्मिन्, एकस्यैव बहूपमानोपादाने मालोपमा । य-थोत्तरमुपमेयस्योपमानत्वे ( पूर्ववदभिन्नभिन्नधर्मत्वे ),

अनवरतकनकवितरणजललवभृतकरतरङ्गितार्थिततेः ।
भणितिरिव मतिर्मतिरिव चेष्टा चेष्टेव कीर्तिरतिविमला ॥२१॥
मतिरिव मूर्तिर्मधुरा मूर्तिरिव सभा प्रभावचिता ।
तस्य सभेव जयश्रीः शक्या जेतुं नृपस्य न परेषाम् ॥ २२ ॥

इत्यादिका ) रशनोपमाच " न लक्षिता । एवंविधवैचित्र्यसहस्रसम्भवात् । उक्तभेदानतिक्रमाच्च ।

---

**अनयेनेवेति ।**

अत्र म्लानिरेव सर्वोपमानसाधर्म्यम् । अन्त्या यथा—**ज्योत्स्नेवेति** ।

अत्र ज्योत्स्नादीनां नयनानन्दहेतुत्वादयः साधारणधर्मा भिन्नाः ।

पूर्वपूर्वोपमेयस्योत्तरोत्तरमुपमानत्वे रशनोपमा । सापि द्विधा—साधर्म्याभेदात्तद्भेदाच्च । तत्राद्या यथा—**अनवरतेति** ।

अत्र विमलत्वमेव सर्वासूपमासु साधारणो धर्मः । अन्त्या यथा—**मतिरिवेति** ।

अत्र मूर्त्यादीनां मधुरत्वादयो धर्मा भेदवन्तः । त एते भेदाः किमिति नोक्ता इति चेत्, उक्ता एव । उक्तभेदान्तर्भावात् । तथापि तेन तेन रूपेण किं

---

चिदेकजातीयैः कुसुमैः काचिद्विजातीयैस्तथेयमपि सजातीयैर्विजातीयैर्वा बहुभिरुपमानैर्घटितेति द्विविधामालोपमेत्यर्थः। **अनयेनेति** । मनस्विता पांडित्यम् । इतरत्स्पष्टम् । **ज्योत्स्नेवेति** । पद्यं स्पष्टार्थम् । **अनवरतेति** । निरंतरस्वर्णदानाय जललवभृते तत्संबद्धे करे तरंगिता पूर्वपश्चाद्भावेन श्रेणीभूय मिलिता अर्थिततिर्यस्य । भणितिर्वचनम् । ( गीतिश्छन्दः । ) **मतिरिवेति** । चिता व्याप्ता । तस्य नृपस्य सभेव तस्य जयश्रीः परेषां जेतुं शक्या नेति संबंधः। (उद्गीतिश्छ-

---

१ च. झ. सा्ऽथ । २ प्र. नलिनी ।

उपमानोपमेयत्वे एकस्यैवैकवाक्यगे ।
अनन्वयः
उपमानान्तरसंबन्धाभावो ऽनन्वयः ।

---

नोक्ता इति चेत्, एवंविधवैचित्र्यसहस्रसंभवात्सर्वेषामाख्यातुमशक्यत्वात् ।
उपमानेति ।

उपमानान्तरव्यवच्छेदाय यदेकस्यैवोपमानोपमेयत्वे भेदोपचारेणैव निबध्ये-
ते सोऽनन्वयः । तदेतदुक्तम् ‘ उपमानान्तरसंबन्धाभावोऽनन्वयः ’ इति बहु-
व्रीहिसमासात् । यद्वा संज्ञायोगानिर्वचनं तत् । अनन्वयः संबन्धाभावः । स
चार्थादुपमानान्तरेण उपमेयभिन्नेनेति । एवकारो वैचित्र्यविशेषस्फोरणार्थः ।
एकवाक्यगे इति विपर्यासोपमाव्यावर्तनाय । तत्र हि वाक्यद्वये तथाभावः ।

---

(दः ।) वैचित्र्यसहस्रेति । बिंबप्रतिबिंबभावादिभेदेन लोकसिद्धकविकल्पिता-
दिभेदेनोपस्कार्यभेदेन निरवयवादिभेदेन अन्योन्योपायत्वरूपपरंपरितत्वे उपाय-
त्वस्यानुकूल्यप्रातिकूल्यादिभेदेन तेषां परस्परं गुणने इयत्ताया वक्तुमशक्य-
त्वादिति भावः । इत्युपमालंकारः । उपमानेति । न विद्यतेऽन्वयः संबंधोऽर्था-
दुपमानांतरेण यत्र सोनन्वय इति अन्वर्थमलंकारनामेदम् । तत्रान्वर्थसंज्ञाबल-
लब्धमर्थमाह । उपमानांतरेति । भेदोपचारेणेति । भेदेऽसत्यपितद्घटितसा-
दृश्योपचारेणेत्यर्थः । आपाततः शाब्दबोधोपपत्तये उपमानांतरव्यवछेदबोधाय च
आहार्यस्तदुपचारः । एतेन देशकालादिभेदाद्भेदोत्रेति परास्तम् । तथा सत्युपमाया
[illegible]त्तेः । गगनं गगनाकारमित्यादौ तद्युगे तद्देशे वा यथा गगनं तथैतद्युगे एतद्दे-
[illegible]मीति बोधात् । अनन्वये तु निरूपमानत्वनिमित्तोत्कर्षाय स्वयमेव स्वसमानधर्मे-
[illegible]था परो नैतत् समानधर्मेति प्रतीयते । बहुव्रीहीति । उपमानांतरसंबंधाभावपदं
[illegible]हिणाऽनन्वयमाहेत्यर्थः । यद्वा संज्ञेति । संज्ञाभूतस्यापि योगकथनमि-
[illegible] । तथाच योगरूढोयमिति भावः । उपमानांतरेणेति । नन्विदमयुक्तम् ।
[illegible]प्युपमानस्याभावेनांतरशब्दप्रयोगासंगतेरत आह । उपमेयभिन्नेनेतीति ।
[illegible]स्येत्युपमाव्यवछेदाय । एवकारइति । एकस्यैवेति भिन्नशब्दबोध्यत्वव्य-
[illegible]दकैवकार इत्यर्थः । वैचित्र्येति । यद्यप्यस्यावदनमिववक्त्रमित्यत्रानन्व-
[illegible]व तथापि स दुष्ट इति वैचित्र्यस्फोरणायेत्यर्थः । एकवाक्यगे इत्यस्यौ
[illegible]पम्यबोधकशब्दप्रतिपाद्येत्यर्थः । तत्फलमाह । विपर्यासेति । उपमेयो-

उदाहरणम्—

**न केवलं भाति नितान्तकान्तिर्नितम्बिनी सैव नितंबिनीव ।**
**यावद्विलासायुधलासवासास्ते तद्विलासा इव तद्विलासाः ॥ २३ ॥**

**विपर्यास उपमेयोपमा तयोः ॥ ५ ॥**

---

उदाहरणम् । **न केवलमिति ।**

अत्र दशाविशेषादिभेदाद्भेदोपचारः । **विपर्यासइति ।**

---

पमेत्यर्थः । वस्तुतस्तु तत्र द्वितीयसदृशव्यवच्छेदफलकत्वाभावेन योगलब्धार्थेनैव वारणसंभवान्नेदमस्यव्यावर्त्यम् । किं तु तादृशस्थले एव तस्य फलस्य संभवात स्वरूपकथनमिति ध्येयम् । **नकेवलमिति ।** नितांतकांतिः । अतिशयितकांतिः । यावंतो विलासा आयुधानि यस्य सकामस्तस्यलास्यवासा नृत्यस्थानानि । (एवकारोभिन्नक्रमः नितम्बिनीशब्देन सम्बध्यते । यावत् 'अपि तु' इत्यर्थे इत्युदाहरणचन्द्रिका । उपजातिश्छंदः ।) अत्र साधर्म्यमात्रमिवार्थः । न तु भेदांशो बाधात् । रूपके चंद्राद्यभेदबुद्धिः फलं तत्कृत एव चमत्कारः, अत्र तु परस्मिन् स्वसाधर्म्याभावकृतः । न तु स्वाभेदबुद्धिकृतः तस्याः सिद्धत्वादिति ततो भेदः । एतदग्रेऽत्र दशाविशेषादिभेदात् भेदोपचार इति क्वचित् पठ्यते सोऽपपाठः । तथा सत्युपमाया एवापत्तेः । देशकालभेदेनाप्ययमेव तत्तुल्य इति प्रतीतिस्तत्राप्यनन्वय एवेत्याशय इत्यन्ये । ननु 'भुवनत्रितयेऽपि मानवैः परिपूर्णे विबुधैश्च दानवैः । न भविष्यति नास्ति नाभवन्नृप यस्ते भजते तुलापदम् ' इत्यादौ सर्वथैवोपमाननिषेधात्मको ऽसमालंकारः प्राचीनैरुक्तः । उपमानलुप्तोपमाऽतिव्याप्तिवारणाय सर्वथैवेति । एवं च तद्ध्वनिनैव चमत्कारोपपत्तौ अनन्वयस्य पृथगलंकारत्वं किमर्थम् । यदि तु रत्यनुकूलतया कुतश्चिदंगात् भूषणापसारणं यथा चमत्काराय, तथा प्रकृते उपमालंकाराभाववर्णनमेव चमत्काराय न तु तत्रासमनामापृथगलंकार इत्युच्यते । तर्हि तद्ध्वनिनैवोपपत्तिरिति चेन्न । पर्यायोक्तसादृश्यमूलाप्रस्तुतप्रशंसादौ ध्वन्यमानार्थसत्त्वेपि वाच्यार्थकृतचमत्कारमादायालंकारत्ववदुपपत्तेः । अन्यथा दीपकादावपि उपमाभिव्यक्त्यैव चमत्कारोपपत्तौ तेषामपि पृथगलंकारत्वं न स्यादित्याहुः केचित्तु सर्वेभ्य उत्कृष्टगुणस्त्वमिति प्रतीतेर्व्यतिरेकालंकारध्वनिरेवात्रेति वदन्ति । तच्चिन्त्यम् । **इत्यनन्वयः । विपर्यास इति । तयोः ।** कान्यां

१ च. छ. झ. लास्य.

तयोः उपमानोपमेययोः, परिवृत्तिः ( अर्थात् ) वाक्यद्वये, इतरोपमानव्यवच्छेदपरा ( उपमेयेनोपमा इति ) उपमेयोपमा ।

उदाहरणम्—

कमलेव मतिर्मतिरिव कमला तनुरिव विभा विभेव तनुः ।
धरणीव धृतिर्धृतिरिव धरणी सततं विभाति बत यस्य ॥२४॥

**संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यत् ।**

समेन उपमानेन ।

---

तयोरुपमानोपमेययोर्विपर्यास उपमेयोपमानभावः । अर्थाद्वाक्यद्वये । एकवाक्ये तथाऽसंभवात् । मुखमिव चन्द्र इत्यस्य निन्दाभिव्यक्तौ प्रतीपरूपत्वात्। उपमेयोपमेति यौगिकी संज्ञा । विपर्यासश्चायमुपमानान्तरव्यवच्छेदार्थः । उदाहरणम्—**कमलेवेति** ।

**सम्भावनमिति ।**

समेनेत्यत्र सह एकरूपतयेति शेषः । तेन प्रकृतस्य संभविनोऽर्थस्य समे-

---

मानोपमेययोरित्यर्थः । **विपर्यासइति** । स च वाक्यद्वये एव संभवति । तत्र वाक्य द्वयं शाब्दमार्थं वा । तेन ' रामरावणौ मिथस्तुल्यौ ' इत्यादौ नाव्याप्तिः । तत्रापि रामो रावणतुल्यो रावणो रामतुल्य इति वाक्यार्थभेदप्रतीतेः । **यौगिकीति** । उपमेयेनोपमा यत्रेति यौगिकीत्यर्थः । एकस्य साधारणधर्मत्वे इयमिति बोध्यम् । तदाह । **विपर्यासश्चायमुपमानांतरव्यवछेदार्थ इति** । एकेन हि धर्मेण तत्साम्ये एकत्र वर्णिते तेन धर्मेणापरस्यसाम्यमर्थप्राप्तं पुनः शब्देनोच्यमानं तृतीयसदृशव्यवछेदफलकमिति भावः । अत एवात्रोपमानसाधारणधर्मसंबधकृतचमत्काराभावात्। **कमलेवेति** । (कमला लक्ष्मीः । विभा कान्तिः । धृतिः धैर्यम् । बत हर्षे । गीतिश्छन्दः । ) अत्रातिस्पृहणीयत्वप्रचितत्वविस्तृतत्वानि त्रिषु साधारणधर्माः । **इत्युपमेयोपमा** । वाच्यसाधर्म्यालंकारं निरूप्य व्यंग्यसाधर्म्येषु निरूपणीयेषु प्रथमं प्राधान्यात् उत्प्रेक्षामाह । **संभावनमिति**। उत्कटकोटिकः संदेहः । **अथ** । वाच्यसाधर्म्यालंकारनिरूपणोत्तरम् । उत्प्रेक्षा निरूप्यत इति शेषः।**समेन**।प्रकृतमात्मनः समं करोतीति सममुपमानम्। उत्कटस्योपमानस्येक्षा ज्ञानं उत्प्रेक्षा। एवं चोत्कटोपमानकोटिकप्रकृतविषयकसंभा-

नासंभविना सहैकरूपतया यत्संभावनं तदुत्प्रेक्षालंकार इत्यर्थः । सा चेयं हेत्वादिसंभावनाभेदाद्बहुप्रकारा । तत्र हेतूत्प्रेक्षा यथा—

वनमुत्प्रेक्षेत्यर्थः । **समेनासंभविनेति** । अलोकसिद्धेन कविकल्पितेनेत्यर्थः । तदुक्तं चक्रवर्तिना । 'यदा ऽयमुपमानांशो लोकतः सिद्धिमृच्छति । तदोपमैव येनेव शब्दः साधर्म्यवाचकः । यदा पुनरयं लोकादसिद्धः कविकल्पितः । तदोत्प्रेक्षैव येनेव शब्दः संभावनापरः' इति । इदं चेवशब्दसमभिव्याहारे एवा अन्यत्र संभविनापि । तेन मुखं चंद्रं मन्ये इत्यादेः संग्रहः । चंद्र इव मुखमित्यादौ तु उपमैव । **एकरूपतयेति** । तादात्म्येनेत्यर्थः । एवं चासदृशयोः संभावनं नोत्प्रेक्षालंकारः । सादृश्यातिरिक्तमूलकस्मरणादिवत्[1] । किं तु वस्तुमात्रम् । तेन ' वदनकमलेन बाले स्मितसुषमालेशमावहसि यदा । जगदिह तदैव जाने दशार्धबाणेन विजितमिति ' इत्यादौ नोत्प्रेक्षा । अत्र स्मितस्य संभावनोत्थापकत्वेपि जगद्विजितरूपविषयविषयिसाधारणत्वाभावात् । संभावना च रमणीयधर्मनिमित्तिका ग्राह्या । तेन ' नूनं स्थाणुना ऽनेन भाव्यम् ' इत्यादौ निश्चलत्वादिसाधारणधर्मनिमित्तकसंभावनायां नातिव्याप्तिः । रूपकवित्तावतिव्याप्तिवारणाय संभावनमिति । प्रकृतस्येत्यस्य च प्रकृततावच्छेदकरूपेण ज्ञातस्येत्यर्थः । तेन यत्राहार्यसंभावनं तत्रैवोत्प्रेक्षा । तेन ' रामं स्निग्धतरश्यामं विलोक्य वनमंडले । प्रायो धाराधरोयं स्यादितिनृत्यन्ति केकिनः ' इत्यत्रानाहार्यसंभावनायां नातिव्याप्तिः । अत्र तेषां नृत्यप्रवृत्त्या संभावनाया अनाहार्यत्वम् । आहार्यत्वेपि तत्कोटिसहचरितभूयोधर्मवद्विशेष्यकत्वस्योत्कटकोटिकत्वस्य संभवात् । इव नूनं मन्ये जाने ऽवैमि ऊहे तर्कयामि शंके उत्प्रेक्षे इत्यादिभिः प्रतिपादकैः सहिता यत्रोत्प्रेक्षासामग्री तत्र वाच्या सा । यत्र प्रतिपादकशब्दरहितं तत्सामग्रीमात्रं तत्र व्यंग्या । यथा वक्ष्यमाणेष्वेवेवादिपदा ऽदाने । यत्रतत्सामग्रीरहितं प्रतिपादकमात्रं तत्र संभावनामात्रमेव नोत्प्रेक्षेति बोध्यम् । **हेत्वादीति** । आदिना फलस्वरूपे । **बहुप्रकारेति** । जातिगुणक्रियाद्रव्याणां अभावस्य च संभावितत्वेन स्वरूपोत्प्रेक्षा पंचधा । एवं हेतुफलयोरपि जात्यादिरूपत्वेन तयोरपि प्रत्येकं पचविधत्वम् । एवं उत्प्रेक्षानिमित्तस्य धर्मस्योपादानानुपादानाभ्यां बहुभेदेत्यर्थः । परंतु ईदृग्वैचित्र्यस-

**१ ( ख ) स्मरणवत् ।**

उदाहरणम्—

उन्मेषं यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौंदर्यदर्पः ।
नीतः शान्ति प्रसभमनया वक्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः ॥ २५ ॥
लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ २६ ॥

इत्यादौ व्यापनादि लेपनादिरूपतया संभावितम् ।

**उन्मेषमिति ।**

अत्र पद्मलक्ष्म्याः कामिनीचरणयोः स्वभावलग्नत्वं यथोक्तहर्षहेतुकलग्नत्वतादात्म्येन संभावितम् । स्वरूपसंभावनं यथा—**लिम्पतीवेति ।**

अत्र गम्यमानं तमसो व्यापनादि लेपनादिरूपतया संभावितमिति स्वरूपोत्प्रेक्षेयम् । अत एव ‘ तमसो लेपनकर्तृत्वमत्रोत्प्रेक्ष्यम ’ इत्यलंकारसर्वस्व-

---

हस्तं न चमत्कारातिशयायेति न ग्रंथकृतोक्तम् । **उन्मेषमिति ।** (नायकस्य नायिकां प्रति चाटूक्तिरियम् ।) विकासमित्यर्थः । (यः इन्दुः। मम पद्मस्य।) जातिवैरी सहजशत्रुः । (तस्य। इन्दोः। मन्दाक्रान्ता छन्दः ।) **स्वभावलग्नत्वम् ।** तत्त्वेनाध्यवसितः स्वाभाविकः शोभासंबंध इत्यर्थ. । **संभावितमिति ।** अतिमनोहरत्वेन निमित्तेनेति भावः । अत्र लग्नापदेन लक्षणया पृथगुपस्थिते स्वाभाविकशोभासंबंधे यथोक्तहर्षहेतुकपद्मलक्ष्मीलग्नत्वतादात्म्यसंभावना । तात्पर्यानुपपत्त्यैव च लक्षणा । लक्ष्यगतातिशयप्रतीतिश्च प्रयोजनम् । एतावतैवोत्प्रेक्षायां साध्यवसानत्वव्यवहारः प्राचामिति बोध्यम् । न च हेतुफलयोरपि स्वरूपतया स्वरूपोत्प्रेक्षैव सर्वत्र वक्तुमुचितेति वाच्यम् । हेतुत्वफलत्वाभ्यां निर्दिष्टेतरस्य स्वरूपशब्दार्थत्वात् । किंचिद्वैचित्र्यस्यानुभवसिद्धत्वात् । **लिंपतीवेति ।** (मृच्छकटिके प्रथमाङ्के गाढान्धकारवर्णनमेतत् ।) भ्रमातिशयकारकत्वसकलवस्तुमालिनीकरणत्वादि निमित्तम् । अत्रापि व्यापनाद्युपस्थितिः प्राग्वदेव । **व्यापनादीति ।** आदिपदेन कविकल्पितं नभःकर्तृकांजनकर्मकाधःप्रसरणं गृह्यते । तमःकर्तृकांगकर्मकव्यापनं तु स्वतः संभव्येवेति बोध्यम् ।

---

१ प्र. ‘ किरति ’ इति वा पाठः ।

**ससंदेहस्तु भेदोक्तौ तदनुक्तौ च संशयः ॥ ६ ॥**

**भेदोक्तौ यथा—**

कारमतमपास्तम् । विवक्षितविवेकेन लेपनमात्रस्यैवोत्प्रेक्षणात् । एवं फलाद्यु-त्प्रेक्षाप्यूहनीया । **ससन्देह इति ।**

भेदो वैधर्म्यम् । संशयस्तु कविप्रतिभानिर्मित एवालंकारो न तु स्वारसिकः स्थाणुपुरुषादिविषयोऽपि । वैचित्र्याभावात् । अत्र संशयः ससंदेह इति लक्ष-णम् । भेदोक्तौ तदनुक्तौ चेति विभागः । तत्र भेदोक्तौ यथा—

अत्रोत्प्रेक्षैव । तिङंतसमभिव्याहृतेवशब्दस्य संभावनाबोधकत्वात् । स्पष्टं चेदं सन्सूत्रे भाष्ये । **अपास्तमिति ।** क्रियोपसर्जनस्य कर्तुरन्यत्रान्वयायोगात् । तदुक्तं दंडिना । ‘ कर्ता यद्युपमानं स्यात् न्यग्भूतो ऽसौ क्रियापदे । स्वक्रिया-साधनव्यग्रो नालमन्यद्व्यपेक्षितुम् ॥ ’ इति । देवदत्त इव यज्ञदत्तः पचतीत्या-दौ पदांतरोपस्थाप्यकर्तृविशेषणस्य तूपमेयत्वं भवत्येवेति बोध्यम् । प्रथमां-तविशेष्यकबोधवादिमतेऽप्याह । **विवक्षितेति ।** तन्मतेऽपि प्राप्ताप्राप्तविवेकेन क्रियास्वरूपोत्प्रेक्षा इति व्यवहार इति भावः । उत्तरार्धे तु उपमैव । उ-त्प्रेक्षासाधकाभावात् । एवं **च** नामसमभिव्याहृतेव शब्देन तत्रैवोत्प्रेक्षा यत्र संभावनोपयुक्तविशेषणदानम् । यथा ‘ बालेंदुवक्राण्यविकाशभावात् बभुः प-लाशान्यतिलोहितानि । सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥’ इत्यादौ । यत्र क्वचित् स्थितैरपि नखक्षतैर्वक्रत्वलौहित्यादिनोपमाया वक्तुं शक्यतया वसंतनायकसंगतवनस्थलीसंबंधित्वरूपविशेषणकल्पनमुत्प्रेक्षागमक-म् । उपमायां तस्यानुपयोगात् । **इत्युत्प्रेक्षा । ससंदेह इति ।** अत्र ‘प्रकृत-स्य समेन यत्’इत्यनुवर्तते । प्रकृतस्य समेन सादृश्यज्ञानप्रयोज्यो यः संशयः संशयज्ञानं स ससंदेहनामाऽलंकार इत्यर्थः । संदेहेन सह विषयतया तद्विशि-ष्ट इति ससंदेहः । अत एव ‘ इतो गता सा क्व गता न जाने गेहं गता मे हृदयं गता वा ’ इत्यत्र न ससंदेहालंकारः । सादृश्यमूलकत्वाभावात् । अ-स्य प्रेममात्रोत्कर्षकत्वेऽपि वर्णनीयोत्कर्षकत्वाभावाच्च ।असद्विषयेऽपि कस्यचित् प्रेमसंभवात् । संशयश्च समकोटिको ग्राह्य इत्युत्प्रेक्षाव्युदासः । स्थाणुर्वा पु-रुषो वेति संशयवारणायाह । **संशयास्त्विति ।** सादृश्यमूलकत्वाद्यभावे तु

१ ट. ठ. सन्देह

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति चिरं
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः ॥ २७ ॥

भेदोक्तावित्यनेन न केवलमयं निश्चयगर्भो, यावन्निश्चयान्तोऽपि संदेहः स्वीकृतः । यथा—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम् ।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि निश्चितं परतः ॥२८॥

---

**अयमिति ।**

अत्र मार्तण्डत्वादीनां संदेहे सप्ततुरगत्वादीनि वैधर्म्याणि तदाक्षेपकाणि। न चायं व्यतिरेकालंकारः । तस्य संदेहानुयायितया तेनैव व्यपदेशौचित्यात् । ननु भट्टोद्भटेन भेदोक्तौ निश्चयगर्भ एवायं स्वीकृतो न तु निश्चयान्तोऽपि । तत्किमस्यापि स एव पन्थाः । नेत्युच्यते । कृत एतत् । भेदोक्ताविति विभजनात् । निश्चयान्तस्यापि तत्संभवात् । वैचित्र्यानुभवाच्च । यथा—

**इन्दुरिति ।**

---

संशयमात्रमेव नालंकार इति बोध्यम् । **अयमिति** । (राजानं प्रति कस्यचिदुक्तिः ।) इतः । युक्तः । विकल्पान् । संशयान् । आजौ । युद्धे । ('चिरम्' इत्यस्य समालोक्येत्यत्र विदधतीत्यत्र वान्वयः । शिखरिणी छन्दः ।) अयं कि मार्तण्डस्तदन्यो वेति संशयाकारः । अत्र प्रतापेन दुर्निरीक्ष्यत्वसाम्यान्मार्तण्डत्वसंदेहः । दुराधर्षत्वसाम्यात् कृशानुत्वसंदेहः । क्षणेन सकलसंहर्तृत्वसाम्यात्कृतांतत्वसंदेहः । **उक्तानीति** । मार्तण्डादिवैधर्म्येण मार्तण्डत्वाद्यभावनिश्चयेऽपि कृशानुत्वादिसंशयात् अस्य निश्चयगर्भता । वैधर्म्योक्तिस्तु सति मार्तण्डत्वसंशये कृशानुत्वसंशयायोगात् तत्संशयनिवृत्तये कृता॥ निश्चयगर्भश्चोपमाननिष्ठवैधर्म्योक्तौ आदावंते च संशयः मध्ये निश्चयः स निश्चयगर्भ इति तल्लक्षणात् । **निश्चयांतोऽपीति** । उपमेयनिष्ठवैधर्म्योक्त्येति भावः । यथेंदुः किमित्यादौ ललितवचनैर्मुखत्वनिश्चयेऽग्रे केनापि रूपेण संशयाभावात् । अस्यालंकारत्वबीजमाह । **वैचित्र्येति** । **इन्दुरिति** । नायिकां प्रति कस्यचिदुक्तिः । हे हरिणाक्षि एतत् (मुखम्) इन्दुः किम् । तर्हि कलङ्कः क्व । सरसिजं किम् । तर्हि अम्बु कुत्र गतम् । इति प्रथमं सन्दिग्धम् । परतः पश्चात् ललितसविलासवचनैः

किंतु निश्चयगर्भ इव नात्र निश्चयः प्रतीयमान इति उपेक्षितो भट्टोद्भटेन। तदनुक्तौ यथा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ २९ ॥

---

तत्किं भट्टोद्भटेनायमुपेक्षितः। प्रतीयमानवद्वाच्ये तादृग्वैचित्र्याभावादिति गृहाण। भेदानुक्तौ यथा—**अस्या इति**।

---

मुखमिति निश्चितम्। गीतिश्छन्दः।) **प्रतीयमानवदिति**। आपाततः संशये व्यंग्यनिश्चयकृतो ह्यत्र चमत्कारः। निश्चयस्य वाच्यत्वे तु न स इति भावः। अत्र निश्चयगर्भतया संकीर्णो निश्चयांतः। शुद्धस्तु 'चपला जलदाच्युता लता वा तरुमुख्यादिति संशये निमग्नः। गुरुनिश्वासितैः कपिर्मनीषी निरणैषीदथ तां वियोगिनीति' इत्यादौ। अत्र मंजूषादिगतकटकादाविवालंकारव्यपदेशः। किंशब्दनुशब्दादेश्च समकोटिकसंशयविषयत्वे शक्तिः। अयं किं मार्तण्ड इत्यादेरयं मार्तण्डत्वादिसंशयविषय इत्यादिरर्थः। स्वसंशयज्ञापनाय च परं प्रति तथोक्तिः। **अस्या इति**। (विक्रमोर्वशीये प्रथमेऽङ्के उर्वशीमुद्दिश्य पुरूरवस उक्तिः।) अस्याः सृष्टौ यः प्रजापतिर्निर्माता अभूत्स किं चंद्रः किं वा मदनः किं वा पुष्पाकरो मासो वसंतः इति प्रजापतिधर्मिकश्चंद्रत्वादिरूपविरुद्धनानाभावकोटिकः संशयः। (विषयेभ्यः वनितादिभ्यः व्यावृत्तं निवृत्तं कौतूहलं औत्सक्यं यस्य तादृशः। पुराणो मुनिः ब्रह्मा। शार्दूलविक्रीडितं छंदः।) एतन्निर्मातरि कांतिप्रदत्वसत्वेन चंद्रस्य च तत्त्वेन कान्तिप्रदत्वं तयोः सादृश्यम्। अस्याः शृंगारोद्दीपकरूपलावण्यादिमत्वेनाधरदशनादिरूपपुष्पवत्वेन तन्निर्मातरि तादृशलावण्यादिसंपद्वत्तायाः पुष्पवत्तायाश्च सत्त्वेन मदनवसन्तयोरपि तत्सत्त्वात् तद्रूपसादृश्यमूलकोऽयं संशयः। तत्सामग्रीसंपन्नेनैव तद्धर्मवतो निर्माणसंभवात्। केचित्तु 'अस्याः सर्गविधौ' इत्यत्र वितर्कालंकारः। वितर्कश्च संशयोत्तरमनिर्णये ऊहः। तद्व्यंजकश्च नुशब्दादिः। स चेत्थम्। चंद्रान्यो यदि निर्माता स्यात्कान्तिप्रदो न स्यादित्याद्याकारः। अत एव ब्रह्मा यदि निर्माता स्यात् निर्माणसामग्रीमान् स्यादिति संशयोत्तरवर्तितर्कस्यापाद्यं वेदाभ्यासजड इत्यादिना निषिध्यत इति। तन्न। वितर्ककारणत्वेन त्वयाऽप्यत्र संशयांगीकारेण तस्यैवालं-

**तद्रूपकमभेदो य उपमानोपमेययोः ।**
**अतिसाम्यात् ( अनपह्नुतभेदयोः ) अभेदः ।**

अत्र शङ्क्यमानस्य प्रजापत्यादेः कस्यापि न वैधर्म्यमुक्तम् । **तद्रूपकमिति ।**

अभेदोऽभेदारोपः । बीजं तु तत्रातिसाम्यम् । अभेदश्चात्रानपह्नुतभेदयोर्विव-

कारत्वात् । सतोऽपि वितर्कस्य वर्णनीयोत्कर्षानाधायकत्वेनालंकारत्वाभावाच्च । संदेहेनैव तस्याः उत्कर्षसिद्धेः । वेदाभ्यासजड इत्याद्युक्तिस्तु जगन्निर्मातरि ब्रह्मणि सति कथमेतेषु तस्याः निर्मातृत्वसंदेह इत्याशंकाऽपनयनार्थमेवेति बोध्यम् । यत्तु ' इह नमय शिरः कलिगवद्वा, समरमुखे करहाटवद्धनुर्वा ' इत्यत्र विकल्पालंकारः पृथगेव । वाशब्दश्चात्र कल्पान्तरपरः । असामर्थ्ये कलिंगनृपतिवत् शिरो नमय,सति सामर्थ्ये करहाटनृपतिवत् धनुर्नमयेत्यर्थात् । व्यवस्थितश्चायं विकल्प इति । तन्न । वर्णनीयोत्कर्षानाधायकत्वेनैतस्यालंकारत्वे मानाभावात् । उपकुर्वन्ति तं सन्तमित्यादिसामान्यलक्षणाभावात् । एतेन नमनरूपैकक्रियाकर्मत्वेनौपम्यं गम्यमानमलंकारताबीजमित्यपास्तम् । तादृशौपम्यस्याचारुत्वाच्च । अन्ये तु अत्रापि संदेह एव, व्यंग्यस्तु निश्चयो मात्सर्यमुत्सार्येतिवत् इत्याहुः । **इति ससंदेहः । तद्रूपकमिति ।** योऽभेदस्तद्रूपकमित्यन्वयः। तदिति विधेयलिंगग्राहि । **अभेदारोप इति ।** आरोपविषयाभेद इत्यर्थः । यथाश्रुते हि उपमात्वमपि सादृश्यप्रतीतेः स्यात् । ज्ञानानामेव तेषां लौकिकालंकारवत् चमत्कारजनकत्वमित्यन्यत् । उपमानोपमेययोरित्यस्योपमानतावच्छेदकोपमेयतावच्छेदकपुरस्कारेण शब्दान्निश्चीयमानयोरित्यर्थः । तेनाभेदप्रतीतेराहार्यत्वलाभः । तेन भ्रांतिमति नातिव्याप्तिः । अपन्हुतौ अतिशयोक्तौ च नातिव्याप्तिः । अपन्हुतौ स्वेच्छया निषिध्यमानत्वेन भ्रांतिमति तज्जनकदोषेणैव प्रतिबंधात् । अतिशयोक्तेः साध्यवसानलक्षणामूलकत्वात्तस्य पुरस्काराभावात् । अतिशयोक्तिवत् निदर्शनायामपि नातिव्याप्तिः। शब्दादिति विशेषणात् ' मुखमिदं चंद्रः ' इति प्रात्यक्षिकाहार्यनिश्चयगोचरतादात्म्यव्यवच्छेदः । निश्चीयमानयोरित्युक्त्या ' नूनं मुखं चंद्रः ' इत्युत्प्रेक्षायां नातिव्याप्तिः । तत्र ज्ञानमलंकारः अत्राभेद इति भेदाच्च । उपमानोपमेययोरित्येतद्विशेषणलभ्यमर्थमाह । **बीजं तु तत्रातिसाम्यमिति।**तेन 'मुखं मनोरमा रामा' इत्यादिशुद्धारोपविषयाभेदनिरासः। यत्तु सा-

**समस्तवस्तुविषयं श्रौता आरोपिता यदा ॥७१॥**

**आरोपविषया इव आरोप्यमाणाः यदा शब्दोपात्ताः, तदा (समस्तानि वस्तूनि विषयो ऽस्येति) समस्तवस्तुविषयम्। आरोपिता इति बहुवचनमविवक्षितम्।**

---

क्षित इति नापह्नुतावतिव्याप्तिः । तदेतद् द्विविधम्—सावयवं निरवयवं च । तत्राद्यं समस्तवस्तुविषयमेकदेशविवर्ति च । द्वितीयं तु शुद्धमात्रमिति । आद्ये विभागे लक्षणमाह—**समस्तेति ।**

आरोपिता आरोप्यमाणाः । ते सर्वेऽपि यद्यारोपविषयवच्छाब्दा एव भवन्ति तदा समस्तवस्तुविषयं नाम रूपकम् । समस्तं वस्तु आरोप्यमाणं विषयः शब्दप्रतिपाद्योऽत्रेति व्युत्पत्तेः । आरोपिता इति बहुवचनमविवक्षितमित्यारोप्यद्वयस्थले नाव्याप्तिः ।

---

दृश्यप्रयुक्ताभेदस्येव संबंधांतरप्रयुक्ताभेदस्यापि रूपकत्वमिति । तन्न । सादृश्यामूलकस्मरणस्याप्यलंकारतापत्तेः । चंद्रादिपदानां तद्वृत्तिगुणवति सारोपलक्षणायां अभेदप्रतीतिर्व्यंग्येत्येतावतैव रूपकं वाच्यम् । चशब्दादिव्यंग्यत्वे समुच्चय इव । ‘मुखमपरचंद्रः’ इत्यादौ तु कविकल्पितापरचंद्रेण रूपकं बोध्यम् । ‘मुखचंद्रेण विरहतापः शाम्यति’ इत्यादावपि रूपकमेव । न चैवं चंद्राभेदप्रतीतौ विरहतापशामकत्वासंभवः । अभेदप्रतीतेराहार्यत्वेन मुखत्वस्यातिरस्कारेण विशेष्यतया भानेन च तत्त्वसंभवात् । ‘राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्’ इत्यादौ आहार्यनारायणत्वबुद्ध्याऽऽहार्यस्यैव लक्ष्मीकर्तृकालिंगनस्य बोधान्न दोषः । यत्तु आरोप्यमाणो यत्र विषयात्मतयैव प्रकृतकार्योपयोगी न स्वातंत्र्येण स परिणामः । अत्र च विषयाभेदः आरोप्यमाणे उपयुज्यते । रूपके तु नैवमिति विशेषः । ‘वदनेनेन्दुना तन्वी स्मरतापं विलुम्पति’ इत्यादि उदाहरणम् । अत्र हि स्मरतापनाशनसामर्थ्यं मुखात्मनैवेन्दोः । ग्रीष्मसंतापहारकत्वात् रमणीयशोभाऽऽधारत्वाच्चेन्दुर्विषयतयोपात्त इति दाक्षिणात्याः । तन्न । इन्दौ वदनतादात्म्यप्रतीतेर्वर्णनीयमुखाद्यनुत्कर्षकत्वेनालंकारत्वाभावात् इति दिक् । **आरोपविषयवदिति ।** तेषां श्रौतत्वेऽविवादादृष्टांततेति बोध्यम् । श्रौता इत्यस्य व्याख्या शाब्दा

---

१ ठ. मु. पु. आर्थे ।

यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम् ।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ३० ॥

अत्र पादत्रये, अन्तर्धानव्यसनरसिकत्वमारोपितधर्म एवेति रूपकपरिग्रहे साधकमस्तीति तत्संकराशङ्का न कार्या ।

---

उदाहरणम् —**ज्योत्स्नेति** ।

अत्र पादत्रये ज्योत्स्नादिषु भस्मत्वादिकमारोप्यमाणं सर्वं शाब्दम् । नन्विदं रूपकोदाहरणं न युज्यते । साधकबाधकाभावेन रूपकोपमयोः संदेहात्संदेहलक्षणसंकरौचित्यादिति चेत् । भवेदेवम् । यद्यन्तर्धानव्यसनरसिकत्वं विशेषणं

---

इति । सावयवत्वं च परम्परसापेक्षरूपकसमुदायत्वम् । **ज्योत्स्नेति** । (रूपकमुखेन ज्योत्स्नी योगिनीत्वेन वर्णयति । ज्योत्स्नैव भस्म ।) छुरणं अंगलेपनम् । (तारका एव अस्थीनि । ) व्यसनं कौतुकम् । (रात्रिरेव कापालिकी योगिनी । चन्द्र एव) मुद्राकपालं कापालिकानां अंजनादिधारणकपालम् । (मन्दाक्रांता छन्दः ।) अत्र समुदायात्मकस्य सावयवरूपकस्यावयवानां सर्वेषामपि समर्थ्यसमर्थकत्वं परस्परं तुल्यम् । तथापि कवेः रात्रौ कापालिकीरूपकस्यैव समर्थ्यत्वेनाभिप्रेतत्वादितरेषां समर्थकत्वं गम्यते । रात्रिकापालिकीत्यस्य कापालिक्यभिन्ना रात्रिरित्यर्थः । उपमानपदस्य लक्षणायामपि व्यंग्याभेदघटितवाक्यार्थस्यापि बोधात् । उपमायां तु सादृश्यघटित एव वाक्यार्थबोध इति विशेषः । **रूपकोपमयोरिति** । 'उपमितं व्याघ्रादिभिः' इति सूत्रेण समास उपमेयविशेष्यक एव बोधः । उपमानोपमेयसमभिव्यवहारे उपमेयस्य विशेष्यतायाः लोकव्युत्पत्तिसिद्धत्वात् । अत एवेदं सूत्रं विशेषणं विशेष्येणेति सिद्धे विशेष्यस्य पूर्वनिपातार्थमिति काशिकायामुक्तम् । मुखचंद्र इति विशेषणसमासे चंद्ररूपकव्यवहारः । यत्तु रूपके विशेषणं विशेष्येणेति समासे उपमेयस्य पूर्वनिपाताश्रित्य इति । तन्न । मयूरव्यंसकादिसमासस्य विशेषणसमासपदेन विवक्षणात् । एवं च संदेहः एवेति भावः । एतदेव ध्वनयन् उदाहरिष्यति जस्सरणेति । तत्रान्तःरस्य विशेष्यत्वे हि मंडलाग्रलतादीनां वाच्यानामनन्वयः स्पष्ट एव ।

**श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत् ।**

केचिदारोप्यमाणाः शब्दोपात्ताः, केचिदर्थसामर्थ्यादवसेयाः—इत्येकदेशविवर्तनात् एकदेशविवर्ति । यथा—

जस्स रणन्तेउरए करे कुणन्तस्स मण्डलग्गलअम् ।
रससंमुही वि सहसा परम्मुही होइ रिउसेणा ॥ ३१ ॥

अत्र रणस्यान्तःपुरत्वमारोप्यमाणं शब्दोपात्तम्; मण्डलाग्रलतायाः नायिकात्वम्, रिपुसेनायाश्च प्रतिनायिकात्वम् अर्थसामर्थ्यादवसीयते

---

न स्यात् । तद्धि रूपकपरिग्रहे साधकम् । कापालिक्यां तत्संभवाद्रात्रावसंभवाच्च । उपमापरिग्रहे तु रात्रेरेव प्राधान्यात्तस्यानन्वय एव स्यात् । **श्रौताइति** ।

ते इत्यारोपिताः । तथा च यत्र केचिदारोप्यमाणाः शब्दोपात्ताः केचिदर्थसामर्थ्यादवसेयास्तदेकदेशविवर्ति । एकदेशे विशेषेण वर्तत इति व्युत्पत्तेः । उदाहरणम्—**जस्सेति** ।

अत्र रणेऽन्तःपुरत्वमारोप्यं शाब्दम् । मण्डलाग्रलताया नायिकात्वं रिपुसेनायाः प्रतिनायिकात्वं चारोप्यं न शाब्दम् । किं त्वन्तःपुरत्वारोपसामर्थ्यादेवा

---

एवं च कापालिकीव रात्रिः कापालिक्यभिन्नेति वा, ज्योत्स्ना भस्मेव ज्योत्स्नैव भस्मेति वा, अस्थ्यभिन्नास्तारकाः अस्थिसदृशास्तारका इत्यादिक्रमेण रूपकोपमयोः संदेह इत्याशयः । **रात्राविति** । कापालिक्यभेदानापन्नरात्रावित्यर्थः । **रात्रेरेवेति** । कापालिक्यभेदानापन्नरात्रेरेवेत्यर्थः । **अनन्वयइति** । बाधादिति भावः । कापालिक्यभेदग्रहे तु तद्धर्मांतरेऽन्तर्धानव्यसनरसिकत्वान्वये नानुपपत्तिरिति भावः । ननु अन्तर्धानं स्वस्य चोराणां वेति उपमायामपि न तदन्वयानुपपत्तिरिति चेन्न । साधारणधर्मप्रयोगस्य तदा सत्वेनोपमितसमासानापत्तौ मयूरव्यंसकादिसमासस्यैवेष्टव्यत्वेन रूपकस्यैव सिद्धिरित्याशयात् । व्यसनरसिकत्वस्य स्वरँसतस्तस्यामनन्वयाच्च । **विशेषेणेति** । रूपकसंघातस्यावयविनः अवयवे कस्मिंश्चिद्रूपके विशेषेण शब्दमुखेन स्फुटतया इत्यर्थः । **जस्सेति** । 'यस्य रणांतःपुरे करे कुर्वतो मंडलाग्रलताम् । रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना ॥' मंडलाग्रः खड्ग एव लता, तदाकारत्वात् । रसो वीरः शृंगारश्च । सांमुख्यं युयुत्सा रतेच्छाच । पराङ्मुखता युद्धात् स्वामिसंगमाच्च । ( आ-

इति एकदेशे विशेषेण वर्तनादेकदेशविवर्ति ।

**साङ्गमेतत्**

उक्तद्विभेदं सावयवम् ।

**निरङ्गं तु शुद्धम्**

---

वसीयते । अन्यथा तस्यापर्यवसानात् । अत एकदेशे विशेषेण वर्तनादेकदेशविवर्ति । **साङ्गमिति** ।

साङ्गं सावयवम् । एतत् । उक्तप्रकारद्वयवदित्यर्थः । साङ्गत्वमनेकरूपकसमुदायः । एकस्मिन्रूपके द्वितीयस्याङ्गत्वेनावस्थानात् । अङ्गशब्दस्य हेत्वर्थत्वात् । **निरङ्गमिति** ।

निरङ्गमद्वितीयम् । तच्छुद्धमेवेत्यर्थः ।

---

र्या छन्दः । ) **अंतःपुरत्वारोपेति** । अंतःपुरे तासामेवौचित्यादिति भावः । तदाह—**अन्यथेति** । यद्यपि लिंगविशेषात् करग्रहणरससंमुखत्वादेर्नायिकाधर्मत्वेन प्रसिद्धत्वात् श्लिष्टत्वाच्च समासोक्तिविधयैव नायिकात्वावगतिर्वक्तुं शक्या । तथाप्यंतःपुरत्वारोपोऽपि तत्र तंत्रमित्याशयः । न च रूपकसंघातात्मकस्यास्य रूपकभेदगणनायां गणनमनुचितमिति वाच्यम् । चमत्कारविशेषजनकतया तत्समुदायात्मकस्याप्यस्य मालारूपकादिवत् तद्भेदेषु गणनात् । यथा मौक्तिकालंकृतिगणनायामेकं नासामौक्तिकमिव तत्संघातात्मिका मौक्तिकमंजर्यादयो गण्यन्ते तद्वत् । ननु वक्ष्यमाणे विद्वन्मानसहंस इत्यादौ राज्ञो हंसत्वारोपो यथा मनसः सरस्त्वारोपमपेक्षते तथाऽत्रापि नायिकाप्रतिनायिकात्वारोपाभ्यां रणेऽन्तःपुरत्वारोपोऽपेक्ष्यते इति परंपरितत्वमस्य स्यादिति चेन्न । रणेऽन्तःपुरत्वस्य सुखसंचारास्पदत्वादिनेव मण्डलाग्रलतादेर्नायिकात्वाद्यारोपस्य लिंगविशेषकरग्रहादिनाऽपि संभवेनास्य परम्परितत्वाभावात् । राज्ञि हंसत्वारोपस्तु मनसि सरस्त्वारोपं विना न भवत्येव । सरोवराधेयत्वं विना राज्ञि हंससाधर्म्यान्तराभावात् । एवं ' ज्योत्स्नाभस्म ' इत्यादावपि बोध्यम् । अत एव ' नियतारोपणोपायः ' इति वक्ष्यति । एतदित्यस्याव्यवहितपूर्वमात्रपरामर्शकत्वं नायाति । **प्रकारद्वयवदितीति** । **अद्वितीयमिति** । अंगांगिभावहीनमित्यर्थः । केवलस्यैव रूपणादित्याशयः । सावयवत्वं त्वनेकविषयं परस्परसापेक्षं चेति

यथा—

कुरङ्गीवाङ्गानि स्तिमितयति गीतध्वनिषु यत्
सखीं कान्तोदन्तं श्रुतमपि पुनः प्रश्नयति यत् ।
अनिद्रं यच्चान्तः स्वपिति तदहो वेद्म्यभिनवां
प्रवृत्तोऽस्याः सेक्तुं हृदि मनसिजः प्रेमलतिकाम् ॥ ३२ ॥

**माला तु पूर्ववत् ॥ ८ ॥**

मालोपमायामिवैकस्मिन् बहव आरोपिताः ।

यथा—

सौन्दर्यस्य तरङ्गिणी तरुणिमोत्कर्षस्य हर्षोद्गमः
कान्तेः कार्मणकर्म नर्मरहसामुल्लासनावासभूः ।

यथा—**कुरङ्गीवेति** ।

अत्र प्रेममात्रे लतिकात्वारोपः ।

अथ साङ्गस्यैव वैचित्र्यान्तरमाह—**माला त्विति** ।

यथैकत्र बहूपमानयोगे मालोपमा तथैकत्रानेकधर्मारोपे मालारूपकमित्यर्थः।

यथा—**सौंदर्यस्येति** ।

---

बोध्यम् । **कुरंगीति** । (किशोर्या वृत्तान्तं धात्री निवेदयति ।) स्तिमितयति, निष्क्रियाणि करोति । प्रश्नयति, प्रश्नवंतं प्रश्नविषयं करोतीत्यर्थः । अंतः स्वपिति, नयनामुद्रणेऽपि विषयं न गृण्हाति । अभिनवाम् । तस्या एव सेकौचित्यात् । (शिखरिणी छन्दः ।) **अत्र प्रेममात्रे इति** । न तु तदुपपादकत्वेन क्वचिदप्यन्यारोप इत्यर्थः । **वैचित्र्यांतरम्** । एकविषयत्वं परस्परमंगांगिभावानापन्नत्वरूपम् । एवं च सांगस्येत्यस्यानेकरूपकसमुदायस्येत्येवार्थः । क्वचित्तु निरंगस्यैवेति पाठः । एकविषयनानापदार्थारोपरूपत्वान्मालात्वं परस्परसापेक्षत्वाविरहाच्च निरंगत्वमिति तदर्थः । अयमेव युक्तः पाठः । पूर्ववदिति व्याचष्टे । **यथेति** । **एकत्रेति** । उपमेये इत्यर्थः । एकस्योपमानस्य नानोपमेयकृतस्तु न कश्चिच्चमत्कार इति न तत्पृथक् गण्यते । (**सौन्दर्यस्येति** । कश्चिद्विरही प्रेयसीं परामृशति ।) तरंगिणीति । तरंगत्वेनोत्तरोत्तराऽविच्छेदः । योग्यस्थानप्राप्त्या हर्षः । कार्मणकर्म, वशीकरणक्रिया । तत्-

---

१ प्र. वचसा ।

विद्या वक्रगिरां विधेरनवधिप्रावीण्यसाक्षात्क्रिया
बाणाः पञ्चशिलीमुखस्य ललनाचूडामणिः सा प्रिया ॥ ३३ ॥

**नियतारोपणोपायः स्यादारोपः परस्य यः ।**
**तत्परम्परितं श्लिष्टे वाचके भेदभाजि वा ॥ ९ ॥**

---

**नियतेति ।**

नियतस्य मुख्यस्यारोपो वस्त्वन्तरतादात्म्यप्रतीतिस्तस्योपायः कारणं यः परस्यांमुख्यस्यारोपस्तत्परम्परितम् । रूपणानां कार्यकारणभावरूपा परम्परा संजाताऽत्रेति योगादिति केचित् । वस्तुतस्तु नियतमारोपणमुपायो यत्र । आरोपणं विना यदारोपणं न संभवत्येवेति यावत् । एवंभूतः परस्यान्यस्य य आरोपः स तथा । एवं चैकेरूपणानन्तरं परम्परितम् । कार्यकारणभावरूपा परम्परा संजाताऽत्रेति व्युत्पत्तेः । श्लिष्ट इत्यादि । तदेतद् द्विविधम् । उपायभूते रूपके आरोप्यारोपविषययोर्वाचकस्य श्लिष्टत्वाद्भिन्नरूपत्वाच्चेत्यर्थः । तत्राद्यं यथा—

---

क्रियाविशिष्टो हि जगद्वशीकरोति । कातिरप्येतद्विशिष्टा तथेति जगद्वशीकारकत्वं साधारणधर्म इति भावः । नर्मरहसां रहस्यपरिहासानाम् । आवासभूर्वसतिस्थानम् । या यद्वासभूरसति बाधके सा तद्वतीति सामान्यतो व्याप्त्या गृहीततद्वत्त्वं साधारणो धर्मः । एवमग्रेऽप्यूह्यम् । वक्रगिराम् साकूतवचसाम् । विद्या उपदेशिका । अनवधि निःसीमं यत् प्रावीण्यं निर्माणकौशलं तस्य साक्षात्क्रिया करणव्युत्पत्या प्रत्यक्षहेतुः । ( शार्दूलविक्रीडितं छन्दः । ) प्रियायामेकस्यां बहूनां आरोपान्मालात्वम् । यथैकत्र सूत्रे बहूनां पुष्पाणामिति दिक् । **नियतस्य मुख्यस्येति** । वर्णनीयत्वेन प्रकृतस्येत्यर्थः । वृत्तित्वं षष्ठ्यर्थः । **अमुख्यस्य** । अप्रकृतस्य । योऽन्यारोप इत्यर्थः । **केचिदिति** । अत्रारुचिबीजं तु 'आलानं जयकुंजरस्य' इत्यादावव्याप्तिः । प्रकृत एव जये कुंजरत्वारोपस्य प्रकृत एव राज्ञि आलानत्वारोपहेतुत्वात् । **परस्यान्यस्येति** । अप्रकृतस्य प्रकृते य आरोप इत्यर्थः । **एकरूपणहेतुकमिति** । यद्यपि दुर्गाणाममार्गणादौ दुर्गामार्गणादीनामारोपो न रूपकम् । किंतु श्लेषमहिम्नाऽऽरोपमात्रम् । तथापि रूपणपदमारोपमात्रपरमेवेति न दोषः । इदमेव चास्योपायत्वमारोपे, यत्तन्मूलीभूतसाधारणधर्मसंपत्तिः । साधारणधर्मसंपत्तिः रूपकेणैवेत्यत्र न किंचिन्मानम् । यद्वा श्लेषस्थलेऽपि शब्दरूपसाधर्म्यकृत एवा-

---

१ प्र. यत् । २ चैकरूपणहेतुक रूपणान्तरम् इत्युद्योतसम्मतः पाठः ।

यथा—

विद्वन्मानसहंस वैरिकमलासंकोचदीप्तद्युते
दुर्गामार्गणनीललोहित समित्स्वीकारवैश्वानर ।
सत्यप्रीतिविधानदक्ष विजयप्राग्भावभीम प्रभो
साम्राज्यं वरवीर वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥ ३४ ॥

अत्र, मानसमेव मानसम्, कमलायाः संकोच एव कमलानामसंकोचः, दुर्गाणाममार्गणमेव दुर्गायाः मार्गणम्, समितां स्वीकार एव समिधां स्वीकारः, सत्ये प्रीतिरेव सत्यामप्रीतिः, विजयः परपराभव एव विजयोऽर्जुनः,—एवमारोपणनिमित्तो हंसादेरारोपः । यद्यपि शब्दार्थो-

---

**विद्वदिति ।**

अत्र विदुषां मानसं सरोविशेष इत्यारोपहेतुकं राज्ञो हंसत्वारोपणम् । तत्र चारोपविषयारोपणीययोर्हृदयसरोविशेषयोः श्लेषवता मानसशब्देनैवाभिधानम् । एवमग्रेऽपि । तत्र वैरिकमलायाः संकोच एव कमलानामसंकोचः । दुर्गाणाममार्गणमेव दुर्गाया मार्गणम् । समितां स्वीकार एव समिधां स्वीकारः । सत्ये प्रीतिरेव सत्यामप्रीतिः । विजयः परपराभव एव विजयोऽर्जुनः । एवमारोपहेतुकं सूर्याद्यारोपणमिति । ननु श्लेषस्य शब्दपरिवृत्त्यसहतया शब्दालंकारत्वमित्युक्तं वक्ष्यते च । तथा च श्लेषपरम्परितमुभयालंकारो युज्यत इति तद-

---

भेदाध्यवसाय इति तस्यापि रूपकत्वमेवेति न दोषः । **विद्वदिति** । ( राजानं प्रति कवेरुक्तिः । ) हंसः पक्षिभेदः । नीललोहितः शिवः । समित्संग्रामः समिधश्च । स्वीकारोऽनुपेक्षणम् । वैश्वानरो वह्निः । सती पार्वती । दक्षः प्रजापतिः । प्राग्भावः प्रथमोत्पत्तिः । भीमः भीषणः पांडवश्च । साम्राज्यम् आज्ञया राजशासकत्वम् । वैरिंचम् ब्राह्मम् । ( शार्दूलविक्रीडितं छन्दः । ) **दुर्गाणाम्** । विषमभूप्रदेशानाम् । अत्र मानसादिपदं श्लिष्टम् । अत्र श्लिष्टशब्देनार्थद्वयोपस्थितौ श्लेषमहिम्ना प्रकृतसंबन्धिनि अप्रकृताभेदप्रत्ययः । प्रकरणेन प्रकृतसंबन्धिनो विशेष्यत्वात् । स चाभिधामूलव्यंजनयेति बोध्यम् । 'वाचके' इति च बोधके इत्यर्थकम् । ततस्तमेव साधारणधर्ममाश्रित्य प्रकृते राज्ञि हंसत्वाद्यारोपरूपरूपकसिद्धिः । **उक्तम्** । प्राचीनैः । **वक्ष्यते** । अस्माभिः । **उभयालंकार इति** । मानसादिपदस्य परिवृत्त्यसहत्वात् हंसादिपदस्य च

---

१ मुं. पु. मानसं मानसं.

लंकारोऽयमित्युक्तम्, वक्ष्यते च, तथाऽपि प्रसिद्ध्यनुरोधादत्रोक्तः। एकदेशविवर्ति हीदमन्यैरभिधीयते।

भेदभाजि यथा—

आलानं जयकुञ्जरस्य दृषदां सेतुर्विपद्वारिधेः
पूर्वाद्रिः करवालचण्डमहसो लीलोपधानं श्रियः।
सङ्ग्रामामृतसागरप्रमथनक्रीडाविधौ मन्दरो
राजन्राजति वीरवैरिवनितावैधव्यदस्ते भुजः॥ ३९॥

अत्र जयादेर्भिन्नशब्दवाच्यस्य कुञ्जरत्वाद्यारोपे भुजस्य आलानत्वाद्यारोपो युज्यते।

---

वसर एव वक्तुमौचित्यात्किमित्यर्थालंकारमध्ये पठित इति चेत्। सत्यमेतत्। तथापि श्लेषापवादकं रूपकमित्यलंकारसर्वस्वकारादिप्रसिद्ध्यनुरोधेनोक्तः। तथाप्रसिद्धौ किं बीजमिति चेत्, मानसत्वादीनामार्थत्वम्। इदं हि तैरेकदेशविवर्तीत्युच्यते।

द्वितीयं यथा—**आलानमिति**।

अत्र जयादेर्भिन्नशब्दवाच्यकुञ्जरत्वा(द्या)रोपे सति भुजे आलानत्वाद्यारोपो युज्यते। इदमुदाहृतभेदद्वयं परम्परितमालारूपम्। अमालारूपमपि तद् द्रष्टव्यम्। तत्र श्लिष्टवाचके यथा—

परिवृत्तिसहत्वादिति भावः। **श्लेषापवादकं रूपकमिति**। बहुव्रीहिः। उभयमप्यर्थालंकार इत्युक्तेश्चेत्यपि बोध्यम्। **तैरेकदेशेति**। यथा रणेऽतःपुरत्वारोपे तद्विशिष्टसंबंधस्य मंडलाग्रलतादावयोग्यतया तद्बलादेव नायिकात्वारोपस्तथा राजनि हंसत्वारोपे तद्विशिष्टस्यांतःकरणसंबधायोग्यत्वेन तद्बलात् मानसे सरस्त्वारोपेणैकदेशविवर्तीति तैरुक्तमित्यर्थः। नव्यमते तु उक्तलक्षणरीत्या नैकदेशविवर्तित्वमिति बोध्यम्। (**आलानमिति**।) आलानम् गजबंधनस्तंभः। दृषदामिति दार्ढ्यार्थम्। करवालः खड्गः। चंडमहा रविः। लीला सुखस्वापः। उपधानं शिरोनिधानतूलपटः। संग्राम एवामृतसागरः, लोड्यत्वात्। प्रकृष्टमथनमेव क्रीडा, सुखनिर्वाह्यत्वात्। वीरा ये वैरिणः, तदन्येषामुपेक्षणीयत्वात्। (शार्दूलविक्रीडितं छंदः।) **युज्यत इति**। कुंजराभिन्नजयाधारत्वसाधर्म्येणेति भावः। एवमग्रेऽपि बोध्यम्।

१ छ. करः।

अलौकिकमहालोकप्रकाशितजगत्त्रयः ।
स्तूयते देव सद्वंशमुक्तारत्नं न कैर्भवान् ।। ३६ ।।
निरवधि च निराश्रयं च यस्य स्थितमनिवर्तितकौतुकप्रपञ्चम् ।
प्रथम इह भवान्स कूर्ममूर्तिर्जयति चतुर्दशलोकवल्लिकन्दः ।।३७।।

इति च अमालारूपकमपि परम्परितं द्रष्टव्यम् ।

---

**अलौकिकेति ।**

अत्र वंशोऽन्ववाय एव वंशो वेणुरिति । भेदभाजि यथा—**निरवधीति ।**

अत्र लोकशब्दाद्भिन्नेन वल्लिपदेनारोप्यमाणमुक्तम् । परम्परिते चारोप्यारोपविषयानेकत्वेऽपि नालंकारानेकत्वम् । संभूयैव वैचित्र्यप्रकर्षाधायकत्वात् । एवं मालारशनयोरपि द्रष्टव्यम् । यद्यपि रशनारूपकमपि रूपकं संभवति । यथा—

---

एवं जये कुंजरत्वारोपे भुजरूपालानसंबंधित्वं साधारणधर्मः । न चैवमन्योन्याश्रयः। कल्पनामयतया सकलसिद्धेः । कल्पनायाश्च स्वप्रतिभाऽधीनत्वात् । शिल्पिभिः परस्परावष्टंभमात्राधीनस्थितिकाभिः शिलेष्टकादिभिर्गेहविशेषनिर्माणाच्चेति केचित् । वस्तुतो जयकुंजरयोरभेदप्रत्यय इच्छाधीन आहार्य एव । समर्थकारोपः सादृश्यमूलक एवेत्यत्र नाग्रह इत्यन्योन्याश्रयसंभावनैव नेति दिक् । **अलौकिकेति।** अलौकिकस्य लोके ऽन्यत्राद्दृष्टस्य महस्य उत्सवस्यालोकः प्रदर्शनमेव द्योतः तेन प्रकाशितं जगत्त्रयं येन । अलौकिकमहालोको यश इति वा । सद्वंशो महत्कुलं तदेव सद्वेणुः मुक्तोत्पत्तिस्थानं तत्रत्यं मुक्तारत्नम् । अत्र राज्ञि मुक्तात्वारोपे कुलगतो वेणुत्वारोपो निमित्तम् । **निरवधीति ।** ( विष्णुं प्रति भक्तस्योक्तिः । ) निरवधि बहुकालं, निराश्रयं [1]अपराधीनम्। स्थितं स्थितिः । अनिवर्तितनृत्यादिप्रपंचम् । प्रथमः स्वत एव भूतः स्वत एव लब्धराज्यादिश्च। (भूः भुवः स्वः महः जनः तपः सत्यम् अतलम् वितलम सुतलम् तलातलम् महातलम् रसातलम् पातालम् एते चतुर्दशलोकाः तद्रूपा या वल्लिः तस्याः कन्दो मूलम् । पुष्पिताग्रा छन्दः।) लोके वल्लित्वारोपो राज्ञि कंदत्वारोपे निमित्तम् । स च राज्ञि कूर्मत्वारोपे हेतुः । ननु पूर्वश्लोके मुक्तात्वारोपे प्रकाशितजगत्त्रयत्वारोपोऽपि निमित्तम्, अत्र कूर्मत्वारोपे निरवधिस्थितत्वारोपोऽपि निमित्तमितीदं [2]द्वयं अनेकारोपनिमित्तत्वान्मालापरंपरितमेव यु

---

१ अपराधीनमिति पाठः ( ख ) पुस्तके नोपलभ्यते ।
२ 'द्वयम्' इति ( ख ) पुस्तके नास्ति ।

किसलयकरैर्लतानां करकमलैः कामिनां मनो जयति ।
नलिनीनां कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ ३८ ॥

इत्यादि रशनारूपकं न वैचित्र्यवदिति न लक्षितम् ।

**प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।**

उपमेयम् असत्यं कृत्वोपमानं सत्यतया यत् स्थाप्यते, सा तु अपह्नुतिः ।

---

**किसलयेत्यादि ।**

तथापि न तादृशवैचित्र्यवदिति न पृथग्लक्षितम् । **प्रकृतमिति ।**

प्रकृतमुपमेयं निषिध्य असत्यतया व्यवस्थाप्य अन्यदप्रकृतमुपमानं यत्सा-

---

कमिति चेन्न । जोत्स्नाभस्मछुरणधवलेत्यादेरपि तथात्वापत्तेः । नानापरंपरा-त्त्वे एव मालापरंपरितत्वस्य युक्तत्वाच्च । **किसलयेति** । लतानां नलिनीनां च त्रीत्वमार्थम् । करकमलैरिति मुखेंदुभिरिति च योषितामित्यनेनान्वेति । ( आ-र्या छन्दः । ) पूर्वपूर्वारोप्यमाणानां परत्रपरत्रारोपविषयत्वात् रसनारूपता । **न ता-दृशेति** । उपमेयोत्कर्षप्रतिपादनायोपमानीकृतानामुपमेयीकरणे तदुत्कर्षप्र-तिपादनस्थगनात् । न चारोप्यभेदादविरोधः । एकत्र काव्ये उपात्तत्वादिति दि-क् । **इति रूपकम्** । **प्रकृतमिति** । निषिध्येत्यंतेन रूपकव्युदासः । तत्र प्रकृतनिषेधाभावात् । **उपमेयमिति** । इदमुपलक्षणम् । किंचिदपन्हुत्य कस्य-चेत् प्रदर्शनमपन्हुतिरित्येव लक्षणम् । अत एव 'केसेसु बलामोडिअ' इत्यादौ स्वयं न प्रपलाप्य गतास्तद्वैरिणोऽपि तु ततः पराभवं संभाव्य तान्कंदरा न त्यजंतीत्यपन्हुतिर्व्यज्यते ' इति प्रकाशकारैश्चतुर्थे उक्तम् । एवं च 'नायं सु-धांशुः किं तर्हि सुधांशुः प्रेयसीमुखम् ' इत्यादावपन्हुतिरेव । अत एव दंडि-नोक्तम् । 'अपन्हुतिरपन्हुत्य किंचिदन्यार्थसूचनम् । न पंचेषुः स्मरस्तस्य सहस्रं प-त्रिणां यतः ' इति । एतेन 'नायं सुधांशुः' इत्यादौ ' न विषं विषमित्याहुर्ब्र-ह्मस्वं विषमुच्यते ' इत्यादौ च नापन्हुतिः किं तु दृढारोपरूपकमित्यपास्तम् । नेदं मुखं चंद्रः ' इति प्रसिद्धापन्हुत्युदाहरणेऽपि मुखत्वनिषेधे चंद्रारोपदार्ढ्य-संपादकताया वक्तुं शक्यत्वेनानुभवसिद्धत्वेन चापन्हुतिमात्रस्योच्छेदापत्तेः । यदि तु निषेधपूर्वकारोपे चमत्कारविशेषस्यानुभवसिद्धत्वादलंकारान्तरत्वम् । तर्हि प्रकृतेऽपि तुल्यम् । ननु निषिध्येत्यस्य निषेधार्थकत्वे ' शिखा धूमस्येयं प-रिणमति रोमावलिवपुः ' इत्यादौ अपन्हुतिर्न स्यादत आह । **असत्यतये-**

उदाहरणम्—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ ३९ ॥

इत्थं वा—

बत सखि कियदेतत्पश्य वैरं स्मरस्य
प्रियविरहकृशेऽस्मिन्रागिलोके तथा हि ।
उपवनसहकारोद्भासिभृङ्गच्छलेन
प्रतिविशिखमनेनोट्टङ्कितं कालकूटम् ॥ ४० ॥

अत्र हि न सभृङ्गाणि सहकाराणि, अपि तु सकालकूटाः शरा इति प्रतीतिः ।

---

ध्यते सत्यतया व्यवस्थाप्यते सा अपह्नुतिः । सा च शाब्दी आर्थी चेति द्विधा ।

तत्राद्या यथा—**अवाप्त इति** ।

अत्र कलङ्को नैवायमिति शाब्दोऽपह्नवः । आर्थस्तु वक्रीभिर्भङ्गीभिरालोच्यते । तत्कचित्कपटार्थशब्दोपादानात् । यथा—**बतेति** ।

अत्र छलशब्दबलान्न सभृङ्गाणि सहकाराणि अपि तु सकालकूटाः शरा इति प्रतीयते । क्वचित्परिणामादिशब्दवशात् ।

---

**ति । साध्यते ।** आहार्यनिश्चयविषयीक्रियते । तेन ‘ न पद्मं मुखमेवेदम् ’ इत्यादौ नातिव्याप्तिः । तथा विरहिजनवाक्ये ‘नायं चंद्रोऽपि तु मार्तण्डः’ इत्यादौ नैषा। तज्ज्ञानस्य दोषविशेषजन्यत्वेनानाहार्यत्वात्। ‘नायं चंद्रोऽरविंदं वा मुखं वेदं मृगीदृशः’ इत्यत्र च नैषा। निश्चयाविषयत्वाभावात्। **शाब्दीति**। शब्देन यत्रासत्यत्वमाहेत्यर्थः। **अवाप्त इति**। (पूर्णचंद्रे कलङ्कं दृष्ट्वा पार्वतीं प्रति महेश्वरस्योक्तिः।) परिणतरुचः पूर्णस्य शशांकस्य वपुषि प्रागल्भ्यं प्रकटत्वं प्राप्त इत्यन्वयः । विगलतोऽमृतस्य स्यंदः प्रस्रवणं तेन शीतेऽमुष्योरमीत्यन्वयः । ( शिखरिणी छंदः । ) **बतेति** । (सखीं प्रति विरहिण्या उक्तिः ।) कामिलोके स्मरस्य कियद्वैरमित्यन्वयः । सहकारेषु तत्पुष्पेषु । छलम् व्याजम् । (प्रतिविशिखम् । प्रतिबाणम् ।) उट्टङ्कितम् । प्रकाशितम् । (कालकूटम् । तीक्ष्णविषम् । मालिनी

एवं वा—

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ ४१ ॥

अत्र न रोमावलिः, धूमशिखेयमिति प्रतिपत्तिः । एवमियं भङ्ग्यन्तरैरप्यूह्या ।

**श्लेषः स वाक्ये एकस्मिन्यत्रानेकार्थता भवेत् ॥ १०॥**

**एकार्थप्रतिपादकानामेव शब्दानां यत्रानेकोऽर्थः, स श्लेषः ।**

---

यथा—**अमुष्मिन्निति** ।

अत्र धूमशिखा रोमावलिवपुः परिणमतीति परिणामशब्दार्थवशान्नेयं रोमावलिः किं तु धूमशिखेति प्रतीयते । एवं भङ्ग्यन्तरैरप्यूह्यम् । यथा 'इदं ते केनोक्तं' इत्यादौ । **श्लेष इति** ।

परिवृत्तिसहानामेव शब्दानामेकवृन्तगतफलद्वयन्यायेन यत्रानेकार्थप्रतिपादकता सोऽर्थश्लेषः ।

---

छंदः । ) अत्र **छलेति** । सत्यत्वे व्याजताविरहात्तेन भृंगाणामसत्यत्वप्रतिपादनमिति भावः । (**अमुष्मिन्निति** । वेश्यामुद्दिश्य समृद्धं कामिनं प्रति दास्या उक्तिः ।) अमुष्मिन्मृगदृशः पृथुजघनभागे लावण्यामृतसरसि शर्वप्लुष्टः शिवदग्धः स्मरो नूनं निपतित इत्यन्वयः । प्रशमपिशुना शांतिसूचिका । परिणमति प्रादुर्भवति । तप्तांगारस्य जलप्रवेशे धूमशिखा भवतीति स्वभावः । (शिखरिणी छंदः । ) अत्र निषिध्येति क्त्वाप्रत्ययार्थोऽपि लक्षणेऽविवक्षितः । तेन 'मंथानभूमिधरमूलशिलासहस्रसंघट्टजव्रणकिणः स्फुरतीदुमध्ये । छायामृगः शशक इत्यतिपामरोक्तिः' इत्यादावारोपपूर्वकापन्हवे नाव्याप्तिः । अपन्हवस्तत्र पामरवचनोपन्यासादर्थसिद्धः । वाक्यभेदाश्चात्र । बत सखि अमुष्मिन्नित्यनयोस्त्वेकवाक्यतेति बोध्यम् । 'प्रजल्पन्मत्पदे लग्नः कांतः किं न हि नूपुरः' इत्यादावपीयमेव । व्याजोक्तिरित्यन्ये । क्वचित् भंग्या व्यंजनया निषेधबोधनम् । यथा 'अंकं केऽपि शशांकिरे' इत्यादौ । **इत्यपन्हुतिः** । तत्र शब्दश्लेषाद्भेदं दर्शयति । **परिवृत्तिसहानामेवेति** । (उदयमिति ।) उदयं उदयाचलं समृद्धिं च । दिङ्मालिन्यं तमसाऽपायेन च । निद्राजन्या मुद्रा चक्षुषः निद्रेवं

उदाहरणम्—

उदयमयते दिङ्मालिन्यं निराकुरुतेतरां
नयति निधनं निद्रामुद्रां प्रवर्तयति क्रियाः ।
रचयतितरां स्वैराचारप्रवर्तनकर्तनं
बत बत लसत्तेजःपुञ्जो विभाति विभाकरः ॥ ४२ ॥

अत्राभिधाया अनियन्त्रणात् द्वावप्यर्कभूपौ वाच्यौ ।

**परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिः**

प्रकृतार्थप्रतिपादकवाक्येन श्लिष्टविशेषणमाहात्म्यात् (न तु विशेष्यस्य सामर्थ्यादपि) यत् अप्रकृतस्यार्थस्याभिधानम्, सा (स-

---

यथा—**उदयमिति ।**

अत्र विभाकरनामा राजविशेषो मार्तण्डश्चेत्युभयार्थानि 'उदयमयते' इत्यादीनि वाक्यानि । न चायं द्वितीयार्थस्य ध्वनिरेवेति शङ्कनीयम् । संयोगादीनामभावेनाभिधाया अनियन्त्रणाद्द्वयोरपि वाच्यत्वात् । **परोक्तिरिति ।**

परमप्रकृतम् । भेदकानि विशेषणानि । श्लिष्टान्यनेकार्थानि । तेन प्रकृतार्थविशेषणवाचिमात्रशब्दस्य श्लेषमहिम्ना यत्र प्रकृतार्थकेन वाक्येनाप्रकृतार्थ

---

मुद्रा निरुत्साहता च । क्रिया ग्रामगमनादि विहिताः क्रियाश्च । स्वैराचारोऽभिसारादिः स्वेच्छया वेदनिषिद्धाचरणं च । (हरिणी छन्दः ।) **विभाकरनामेति ।** एवं च तदंशे परिवृत्यसहत्वेन शब्दश्लेषेऽपि उदयमित्यादिषु बहुष्वर्थश्लेषादुदाहरणत्वमित्याह । **उदयमयत इत्यादीनीति । द्वयोरपि वाच्यत्वादिति ।** प्रकृतत्वेनेत्यादिः । उभयोः प्रकृतत्वेऽप्रकृतत्वे वा ध्वनित्वाभावादिति भावः । एतेनार्थश्लेषे विशेषणानामेव श्लिष्टत्वं न तु विशेष्याणामपीत्यपास्तम् । केचित्तु 'विभाकरपदं शक्त्या सूर्यं, नृपं योगेन बोधयतीत्येतदंशेऽप्यर्थश्लेषः, परिवृत्तिसहत्वात्' इत्याहुः । यदि त्वत्र राजा प्रकृतो रविरप्रकृतस्तदा द्वितीयार्थस्य शब्दशक्तिमूलध्वनिरेवेति बहवः । **इति श्लेषः । परमप्रकृतमिति ।** अप्रकृतव्यवहार इत्यर्थः । यत्र त्वप्रकृतेन प्रकृताभिधानं तत्राप्रस्तुतप्रशंसेति भावः । **अनेकार्थानीति ।** प्रकृताप्रकृतोभयानुगतानेकार्थानीत्यर्थः । उभयान्वितेति तु न युक्तं । अप्रकृतस्यानुपादानात् । **अप्रकृतार्थव-**

---

१ प्र. रचयति तथा । २ प्र. खण्डनं ।

मासेन संक्षेपेणार्थद्वयकथनात् ) समासोक्तिः । उदाहरणम्—

लहिऊण तुज्झ बाहुप्फंसं तीए स को वि उल्लासो ।
जअलच्छी तुह विरहे ण हुज्जला दुब्बला णं सा ॥ ४३ ॥

अत्र जयलक्ष्मीशब्दस्य केवलं कान्तावाचकत्वं नास्ति ।

---

वचनं सा समासोक्तिः संक्षेपेणार्थद्वयोक्तिः । मात्रग्रहणाद्यत्र विशेष्यपदस्यापि श्लिष्टत्वं तद्व्युदासः । तस्य श्लेषत्वात् । उदाहरणम्—**लहिऊणेति ।**

अत्र विशेष्यवाचिनो जयलक्ष्मीशब्दस्य परमप्रकृतार्थकत्वं नास्ति ।

---

**चनम् ।** अप्रकृतगतव्यवहाररूपार्थस्य वचनं प्रकृतवृत्तांते आरोपो व्यंजनया प्रतिपादनं इत्यर्थः । एवं च समासोक्तौ प्रकृतव्यवहारेऽप्रकृतव्यवहारारोपः । रूपके तु विशेष्ये प्रकृतेऽप्रकृतरूपारोपः । अतएवैकदेशविवर्तिरूपकविषये न समासोक्तिः । संक्षेपेण एकेनैव शब्देन तस्य श्लेषत्वादिति । उपमाध्वनित्वाद्वेत्यपि बोध्यम् । **लहिऊणेति ।** 'लब्ध्वा तव बाहुस्पर्शं यस्याः स कोप्युल्लासः । जयलक्ष्मीस्तव विरहे न खलूज्ज्वला दुर्बला ननु सा' । ( गाथा छन्दः । ) **परमप्रकृतार्थकत्वमिति ।** केवलं तस्य कांतावाचकत्वं नास्ति, विशेषणानां तु उभयगतबाहुस्पर्शप्राप्त्यादिबोधकत्वमित्यर्थः । एवं च लहिऊणेत्यादिपदबोध्यानां अभेदारोपात् व्यंजनया कांताव्यवहाराभेदेन प्रतीयमानस्य जयलक्ष्मीव्यवहारस्य जयलक्ष्मीवृत्तांततया प्रतीयमानस्य चमत्कारकतेति भावः । अत एवोक्तं कुवलयानंदकृतापि 'समासोक्तावप्रस्तुतव्यवहारसमारोपश्चारुताहेतुः' इति । अयं भावः । 'अयमैंद्रीमुखं पश्य रक्तश्चुंबति चंद्रमाः' इत्यादौ श्लिष्टविशेषणप्रतीतप्रस्तुताऽप्रस्तुतवृत्तांतयोः श्लेषभित्तिकाभेदाध्यवसायेनाभेदप्रतीतिविषययोः प्रस्तुतचंद्रादिवृत्तिता । तत्र तयोर्वृत्तांतयोः परस्परं विशेषणविशेष्यभावे कामचारेऽपि प्रस्तुतवृत्तांतो विशेष्यः । तद्बोधकबोध्याप्रस्तुतस्तु अभेदेन तद्विशेषणम् । तत्र यद्यपि प्रस्तुतस्य स्वासाधारणधर्मेण चंद्रेऽन्वययोग्यताऽस्ति, तथापि अप्रस्तुताभेदमापन्नस्य न साऽस्तीति तद्रूपावच्छिन्नस्याप्रकृते धर्मिण्यारोपः । आरोपोऽत्र व्यंजनया बोधः । न चाप्रस्तुताभिन्नत्वेऽपि विशेष्यतायाः प्रस्तुत एव सत्त्वेनास्त्येवान्वययोग्यतेति वाच्यम् । विशिष्टस्यान्वयायोग्यत्वात् । न च रूपकवत्समासोक्तावपि प्रस्तुतचन्द्रेऽप्रस्तुतजाररूपसमारोपश्चारुताहेतुरस्त्विति वाच्यम् । तद्वाचकपदसमभिव्याहाराभावेन तस्यासंभवात् । न चाक्षिप्तजारा-

दिनाक्षिप्तरूपकमस्तु । 'निरीक्ष्य विद्युन्नयनैः पयोदः' इत्यादौ पयोदे द्रष्टृपुरुषविशेषाक्षेपकनिरीक्षणवदाक्षेपकाभावात् । न च विशेषणसाम्यप्रतीताप्रकृतजारवृत्तांत एव चंद्रवृत्तितया प्रतीयमान आक्षेपकोऽस्तु । अप्रस्तुतस्य प्रस्तुते विशेषणतयाऽप्राधान्येनानाक्षेपकत्वात् । स्फटिके जपाकुसुमनिष्ठलौहित्यस्यारोपेऽपि जपाकुसुमत्वानारोपश्च । एतेनाक्षेपाऽसंभवेऽपि परनायिकामुखचुंबनस्य श्लेषमर्यादया व्यंजनया वा प्रतीतस्य प्रकृते धर्मिण्यारोप्यमाणस्य जारासाधारणधर्मत्वेन प्रकृतधर्मिणि जारत्वव्यंजकता सुवचेत्यपास्तम् । किं चैवं सति वाच्यार्थबोधोत्तरं तद्व्यंग्यप्रतीतिः । सापि न केवलव्यवहारमात्रज्ञानात् । अपि तु तादृशनायकनायिकासंबंधविशिष्टव्यवहारज्ञानात् । एवं च वाच्यार्थबोधकालिकचमत्कारस्यापह्नोतुमशक्यत्वेनालंकारत्वस्य दुरपह्नवत्वात् । विपरीतनायकत्वव्यंजनस्य समासोक्त्यंतर्भावं वदतो ध्वनित्वस्य दुर्वारत्वाच्च । तद्व्यंग्यस्याधिकचमत्कारकारित्वेन प्रधानत्वात् । न च श्लिष्टशब्दोपस्थापितयोर्वृत्तांतयोः परस्परमभेदेनान्वये मानाभावः । सहृदयहृदयस्यैव प्रमाणत्वात् । अत एव 'आगत्य संप्रति वियोगविसंष्ठुलांगीम्' इत्यत्रार्थशक्तिमूलो नायकनायिकावृत्तांतो वाच्यरविकमलिनीवृत्तांताध्यारोपेणैव स्थित इति प्रदीपकृतः । प्राचीनानुभवमपलप्यापि यदि एकत्र द्वयमिति रीत्या प्रस्तुताप्रस्तुतवृत्तांतयोर्विशेष्येणैवान्वयः स्वीक्रियते, एवमपि वाच्यार्थबोधकाले प्रस्तुते धर्मिणि नाप्रस्तुतजारत्वारोपं प्रत्याशा । तथाहि । यद्यप्यनयोर्भिन्नपदोपात्तविशेषणयोरिव विशेष्येणैव साक्षादन्वयात्समप्राधान्यमस्तीति स्वीक्रियते, तथाप्यप्रस्तुतवृत्तांतान्वयानुरोधान्न प्रस्तुतेऽप्रस्तुतरूपसमारोपः । प्रस्तुतेऽप्रस्तुतवृत्तांतारोपेणैव सिद्धेः । अप्रस्तुतरूपसमारोपेऽपि प्रस्तुतवृत्तांतान्वयायोग्यतायास्तदवस्थत्वाच्च । नन्वेवं सति विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिरिति प्राचीनलक्षणाऽसंगतिः । अप्रस्तुतधर्मिव्यंजनस्य त्वयानपेक्षणादिति चेत् न । स्वरूपतोऽप्रस्तुतवृत्तांतारोपस्य न चमत्कारित्वम् । किं तु अप्रस्तुतकामुकादिसंबधित्वेनावगम्यमानस्यैव तस्य आरोपः । अतः श्लेषादिमाहिम्ना विशेषणपदैः स्वरूपतः समर्पितेन चुंबनादिना ऐन्द्री चंद्र इत्येतद्गतस्त्रीलिंगपुल्लिंगसहकृतेन तत्संबंधिनि कामुकादौ अभिव्यक्ते पुनस्तदीयत्वानुसंधानात् । विशेषणसाम्येन वाच्योपस्कारकस्याप्रस्तुतव्यंजन-

स्याक्षेपणात् ।,अप्रस्तुतस्येत्यस्याप्रस्तुतव्यवहारस्येत्यर्थो वा । एतेन वदनचुंबनस्य पुत्रादिसाधारण्यात्कथं कामुकाभिव्यंजकत्वम् । किं च ' अहर्मुखं चुंबति भानुबिंबम् ' इत्यत्रापि नायकाद्यभिव्यक्त्यापत्तिरित्यपास्तम् । यत्तु चंद्रऐंद्रीपदगतलिंगाभ्यामभिव्यक्तनायकयोः स्वव्यंजकपदोपस्थापिताभ्यां भेदेनैवान्वय उचितः । समानपदोपात्तत्वप्रत्यासत्तेरिति । तन्न । एवं हि वदता व्यवहारावच्छेदकत्वं तयोः स्वीक्रियते न वा । आद्ये एकस्यार्थस्योभयत्रान्वयोऽव्युत्पत्तिग्रस्तः । अंत्ये रसाननुगुणत्वम् । यदपि ऐंद्यादौ नायिकात्वाभाने केवलं व्यवहारावच्छेदकत्वमात्रस्वीकारे बाधः । नायिकात्वानालीढकेवलैंद्रीमुखचुंबनरूपस्य व्यवहारस्य नायकासंबंधित्वात् । न हि दिक्तादात्म्यं विना नायिकाया पृथङ्मुखं विशेषयितुं सामर्थ्यमस्तीति । तदपि न । मुखशब्दश्लेषसामर्थ्येनैंद्रीमुखमित्यस्यैंद्यंशमोषेण केवलमुखचुंबनस्योपस्थितिः । तदेतदुक्तं कुवलयानंदे । 'श्लेषादिमहिम्ना स्वरूपतः समर्पितेन वदनचुंबनादिना' इति । न ह्यैंद्रीशब्दार्थेन दिग्रूपेण वदनरूपमुखपदार्थस्यान्वयो वक्तुं शक्यः सहृदयैः । नन्वेतादृशकुसृष्टिकल्पनापेक्षया विशेषणसाम्यमहिम्ना प्रतीतोऽप्रकृतवाक्यार्थः स्त्रीलिंगपुल्लिंगाभ्यामभिव्यक्तनायकाद्यभिन्नचंद्रादिघटितप्रकृतवाक्यार्थे स्वावयवतादात्म्यापन्नतदवयवोऽवतिष्ठते इत्येव कल्पयितुं युक्तम् । एवं च नायिकाऽभिन्नेंद्रदिशासंबंधिवदनाभिन्नप्रारंभकर्मकचुंबनरूपसंबंधाश्रयो नायकाभिन्नश्चंद्र इति बोध इति चेन्न । एवं हि ऐंद्र्यां नायिकाभेदप्रतीतौ मुखचुंबनादौ वदनचुंबनाद्यभेदप्रतीतावपि वदनचुंबने साक्षान्नायिकासंबंधाप्रतीत्या रसोद्बोधानापत्तेः । न च व्यंजनया तत्प्रतीतिरस्त्येव, यस्मिन् यदभेदः तत्संबंधिनि तत्संबन्ध्यभेद इति न्यायेन वा मानसी तत्प्रतीतिस्तत एव चमत्कार इति वाच्यम् । तदपेक्षया साक्षाच्चमत्कारोपपादकवाच्यार्थबोधव्युत्पादनस्यैवौचित्यात् । ननु व्यंजनयाऽप्रकृतार्थबोधः । शक्तेः प्रकरणादिना नियंत्रणात् । ततो व्यंजनमाहात्म्यादेव प्रकृतवाक्यार्थतादात्म्येनावतिष्ठत इति चेत् । व्यांजनिकोऽप्रकृतार्थबोधो नायिकाद्यविशेषितो विशेषितो वा । नाद्यः । रसाननुगुणत्वात् । अंत्ये स्वपदोपस्थाप्यलिंगाभ्यां नायिकाद्यभेदबोधो व्यर्थोऽसंभवी च । नायिकाविशेषणकव्यवहारबोधनेन कृतार्थत्वात् । अपि च तथा सति जारकर्तृकसानुरागपरनायिकामुखचुंबनाभिन्नप्राचीप्रारंभसंयोगाश्रयो जाराभिन्नश्चंद्र इति बोधकदर्थनमेव स्यात् । तस्मा-

## निदर्शना ।

**अभवन्वस्तुसंबन्ध उपमापरिकल्पकः ॥ ११ ॥**

---

श्लिष्टत्वं चोपलक्षणम् । औपम्यगर्भादीनामपि संभवात् । यथा 'विलिखति कुचौ' इत्यादाविति प्राचीनः पन्थाः । अत्र नव्याः—परोक्तिरिति परशब्देन सामान्यतः प्रकृतमप्रकृतं वा विवक्षितम् । तेन यत्राप्राकरणिकविशेषणसामर्थ्यात्प्राकरणिकमुच्यते तदपि संगृह्यते । तत्रापि वैचित्र्याविशेषात् अन्यत्रानन्तर्भावाच्च । यथा 'संप्राप्ते सकलाङ्ग'—इत्यादि । अत्र ह्यप्रकृतस्य भृङ्गस्य विशेषणसामर्थ्यात्प्रकृतस्यासत्पुरुषस्य प्रतीतिरित्याहुः । तन्न युक्तम् । अप्रस्तुतप्रशंसयैव तत्संग्रहात् । 'येनास्यभ्युदितेन' इतिवत् । वृत्तौ चाप्रस्तुतप्रशंसाप्रकरणे तत्र समासोक्तिपदं श्लिष्टविशेषणत्वमात्रपरम् । **निदर्शनेति** ।

---

व्यंजनया शक्त्या वोपस्थिताप्रस्तुतवृत्तांतेन व्यंजनयोपस्थितनायिकादिसंबंधित्वेन गृहीतेनाभेदमापन्नप्रस्तुतवृत्तांतारोपः प्रकृतविशेष्ये नव्यमते श्लेषस्थलेऽप्रकृतोपस्थितेः शक्त्यैव सत्त्वेन तन्मते शक्त्यैवाप्रकृतार्थोपस्थितिः, प्राचां तु व्यंजनयेत्येतावान्विशेषः । एवं च वाच्यार्थबोधोत्तरं यदि चंद्रादौ नायकत्वादिप्रतीतिरपि सहृदयानुभवसाक्षिकी तदास्त्वित्युपपादितमेव प्राक् । अत एव समासोक्तौ साधारणविशेषणबलादेवोपमानप्रतीतौ तदुपादानवैयर्थ्यमिति शेषे वक्ष्यति प्रकाशकृत् । अनेन तत्सादृश्यप्रतीतिर्व्यंजनया न तु तदभेदप्रतीतिरिति लभ्यते । प्रस्तुतप्राचीवृत्तांते आरोप्यमाणाप्रस्तुतखंडितनायिकाविशेषवृत्तांतसमर्थनाय तस्यावश्यकत्वाच्च । एवं च सानुरागपरनायिकामुखचुंबनाभिन्नप्राचीप्रारंभसंयोगाश्रयश्चंद्र इत्येव बोधः । समासोक्तिर्गुणीभूतव्यंग्येति व्यवहारस्तु प्रकृतव्यवहारेऽप्रकृतव्यवहाराभेदस्य व्यंजनया प्रतीतेर्निर्बाध एवेति दिक् । **औपम्यगर्भादीनामिति** । आदिना साधारणविशेषणसङ्ग्रहः । 'अन्धेन पातभीत्या संचरता मया विषमविषयेषु । दृढमिह मया गृहीता हिमगिरिशृंगादुपागता गंगा ॥' अत्र गिरिशृंगप्रभववेणुयष्टिव्यवहाराभिन्नव्यवहारवती गंगेति प्रतीयते । **इति समासोक्तिः** । अभवन् प्रतीतिविषयतामलभमानः वस्तुनोर्वाक्यार्थयोः पदार्थयोर्वा संबन्धोऽन्वयः । अत एव प्रतीतिपर्यवसानाभावादस्य दृष्टांततो भेदः । परस्परनिरपेक्षयोर्वाक्यार्थयोर्दृष्टांतालंकारः, इयं पुनः सापेक्षयोरिति भेद इत्यन्ये । तर्हि वाक्यमसंगतं स्यादत आह । **उपमापरिकल्पक**

निदर्शनं दृष्टान्तकरणम् ।

उदाहरणम्—

क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः ।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम् ॥ ४४ ॥

अत्र, उडुपेन सागरतरणमिव मन्मत्या सूर्यवंशवर्णनमित्युपमायां पर्यवस्यति ।

---

' यथाश्रुतमात्रेणासंभवी वस्तुसंबन्धो यत्रोपमां कल्पयित्वा पर्यवस्यति सैका निदर्शना । दृष्टान्तकरणात्मकनिदर्शनरूपत्वात् । सा च द्विधा—अवान्तरवाक्यभेदे तदभेदे च । तयोराद्या यथा—**क्व सूर्येति ।**

अत्राहं सागरं तितीर्षुरस्मीत्यस्यासंबद्धार्थकतया उडुपेन सागरतरणवन्मदीयमत्या सूर्यवंशवर्णनमसंभावितमित्युपमायाः कल्पनम् ।

---

**इति** । औपम्यमाक्षिप्य पर्यवस्यतीत्यर्थः । **क्वेति** । ( रघुकाव्ये प्रथमसर्गे स्वाहंकारं परिहर्तुं कालिदासस्योक्तिः । उडुपं चर्मावनद्धवंशपात्रम् । मोहात् दुस्तरं सागरमुडुपेन तितीर्षुरस्मीत्यर्थः । अत्र स्वमतिसूर्यप्रभववंशयोरत्यंताननुरूपत्वं बोध्यते । तदनंतरमुडुपकरणकसागरतरणेच्छायाः अप्रकृतायाः कथनेन तादृशमतिकरणकवर्णनेच्छायाः पूर्वार्धेत आक्षेपः । तयोश्च परस्परासंबन्धस्य स्पष्टत्वादौपम्यमादाय पर्यवसानम् । तत्फलितमाह । **उडुपेन सागरतरणवदिति । कल्पनम् ।** व्यंजनम् । प्रतीयमानाभेदरक्षणायेति भावः । एवं चात्रार्थी निदर्शना । ' त्वत्पादनखरत्नानि यो रंजयति यावकैः । इन्दुं चन्दनलेपेन पांडरीकुरुते हि सः ' इत्यादौ तु शाब्दी बोध्या । वाक्यार्थगा चोभयत्रापि । एवं ' त्वत्पादनखरत्नानां यदलक्तकमार्जनम् । इदं श्रीखण्डलेपेन पाण्डरीकरणं विधोः ' इत्यत्राप्येपैव । न चेदं वाक्यार्थरूपकम् । लोकप्रसिद्धोपमानत्वोपमेयत्ववतोरभेदस्यैव रूपकत्वात् । किं च तत्र सादृश्यलक्षणामूलाऽभेदप्रतीतिः । इह तु प्रतीयमानाभेदानुपपत्त्या तत्त्वकल्पनेति भेदात् । ' नितरां निर्गते नीरे सेतुमेषा चिकीर्षति ' इत्यादौ किंचिद्दाक्षिण्यसमागततत्कालोपेक्षितप्रतिनिवृत्तनायिकान्तरासक्तनायकानयनार्थं सखीं प्रेषयितुकामां नायिकामुद्दिश्य सख्या वचनेऽपि आर्थी निदर्शनैव । एतेनात्र ललितालंकारः वर्णनीयवाक्यार्थमनुक्त्वैव वर्ण्ये धर्मिणि तत्स्वरूपस्य कस्यचिदप्रस्तुतवाक्यार्थस्य वर्णनरूपः इति अपास्तम् । **नहि प्रस्तुताप्रस्तुतवृ-**

**यथा वा—**

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम् ।**
**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम् ॥४५॥**

**अत्र, कथमन्यस्य लीलामन्यो वहतीति तत्सदृशीमित्युपमायां पर्यवसानम् ।**

---

अन्त्या यथा—**उदयतीति ।**

'अत्रान्यलीलोद्वहनस्यान्येनासंभवाद्वारणेन्द्रलीलासदृशीं लीलामित्युपमायां पर्यवसानम्। एवं च ' पूर्वोदाहरणे वाक्यार्थ 'उपमाक्षेपकः इह तु पदार्थमात्रम् ' इति व्याख्यानमनादेयम् । अत्रापि लीलापदार्थमात्रस्यानाक्षेपकत्वात् । एषा मालारूपापि दृश्यते ।

---

त्तांतयोः शब्दोपात्तयोरेव निदर्शनेत्यत्र मानमस्ति । न चैवमतिशयोक्तिविषयस्याप्यार्थरूपकेणापहारः स्यादिति वाच्यम् । विषयताावच्छेदकरूपेण भाते विषये विषयितावच्छेदकावच्छिन्नविषय्यभेदस्य रूपकशरीरस्य विषयितावच्छेदकरूपेण भासमानविषयात्मकादतिशयोक्तिस्वरूपाद्विलक्षणत्वेन तयोरैक्यासंभवात् । न च निदर्शनाविषये व्यंग्योपमयैवास्तु चमत्कार इति वाच्यम्। अत्राभेदप्रतीतिकृतचमत्कारस्यैव सत्त्वात् । कल्पितौपम्यमूलिकया पर्यवसन्नया तयैव चमत्कार इत्याशयात् । तदुक्तम् ' उपजीव्यत्वेन भेदात् ' इति । **उदयतीति ।** माघे चतुर्थसर्गे रैवतकनाम्नः पर्वतस्य वर्णनम् । वितताः विस्तीर्णाः ऊर्ध्वाः रश्मय एव रज्जवो यस्य इदं अहिमरुचौ इत्यस्य हिमधाम्नि इत्यस्य च विशेषणम् । अहिमरुचिः सूर्यः हिमधामा चंद्रः । विलंबिघण्टाद्वयेन परिवारितो यो वारणेन्द्रस्तस्य लीलाऽभिन्नां लीलामित्यन्वयः । श्लेषेण लीलापदेन लीलाद्वयोपस्थितेः । ( पुष्पिताग्रा छन्दः । ) श्लेषाश्रयणे बीजं दर्शयति । **अत्रान्येति ।** अन्यलीलातादात्म्यस्यान्यलीलायामसंभवाच्चेत्यपि बोध्यम् । न चेदृशस्थलेऽन्वयानुपपत्त्या लीलापदस्य तत्सदृशलीलायां लक्षणैव स्यादिति वाच्यम् । आरोपेणाप्यन्वयोऽपपत्तेः । वस्तुमाहात्म्यादेव त्वस्याः सादृश्यव्यंजकत्वम् । तदाह—**उपमायां पर्यवसानमिति ।** अत्रोपमानोपमेयधर्मयोरभेदप्रतिपत्तिः । अत इयमेव पदार्थनिदर्शनेत्युच्यतेऽन्यैः । तत्र पदार्थनिदर्शनात्वे कस्यचिदुक्तिं खंड-

दोर्भ्यां तितीर्षति तरङ्गवतीभुजंग-
मादातुमिच्छति करे हरिणाङ्कबिम्बम् ।
मेरुं लिलङ्घयिषति ध्रुवमेष देव
यस्ते गुणान्गदितुमुद्यममादधाति ॥ ४६ ॥

इत्यादौ मालारूपाऽप्येषा द्रष्टव्या ।

**स्वस्वहेत्वन्वयस्योक्तिः क्रिययैव च साऽपरा ।**

क्रिययैव स्वस्वरूप–स्वकारणयोः संबन्धो यदवगम्यते, सा अपरा निदर्शना ।

यथा—

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ ४७ ॥

अत्र पातक्रियया पतनस्य, लाघवे सति उन्नतपदप्राप्तिरूपस्य च संबन्धः ख्याप्यते ॥

---

यथा—**दोर्भ्यामिति । स्वस्वेति ।**

यत्र क्रिययैव स्वस्य स्वहेतोश्चान्वयो हेतुहेतुमद्भावरूपः ख्याप्यते साऽपरा निदर्शना । यथा—**उन्नतमिति ।**

अत्र पतेत्पदप्रतिपाद्यस्य पातस्य कार्यस्य लाघवे सत्युन्नतपदप्राप्तिरूपस्य कारणस्य च तथासंबन्धः पततिपदप्रतिपाद्यया पातक्रियया प्रतिपाद्यते । तथा

---

यति । **एवं चेति** । समस्तत्वेनाक्षेपकस्यापि पदत्वादिदं चिंत्यम् । **दोर्भ्यामिति ।** (राजानं प्रति कस्यचिदुक्तिः । दोर्भ्याम् बाहुभ्याम् ।) तरंगवतीभुजंगः समुद्रः । हरिणांकश्चंद्रः । (गदितुम् । वक्तुम् । उद्यमम् । उद्योगम् । आदधाति । करोति । वसन्ततिलका छन्दः । ) अत्रैकस्य गुणगणनोद्यमस्य बहून्युपमानानीति माला। **स्वस्य** । कार्यस्य। **ख्याप्यते** । परान्प्रति बोध्यते । (**उन्नतमिति** ।) उन्नतं उत्कृष्टं ऊर्ध्वस्थानं च । लघुरल्पमतिः अपकृष्टगुरुत्ववांश्च । पतनं पदभ्रंशः अधःसंयोगहेतुक्रिया च । (दृषत्कणः । पाषाणकणः । ) चारुमारुतो मंदवातः न तु झंझावातः । हेलया पातोपपादकमिदम् । ( रथोद्धता छन्दः । ) **तथासंबंधः** । कार्यकारणभावरूपः । इयं संभवद्वस्तुसंबंधनिबंधने-

---

१ प्र. ध्रुवमत्र । २ छ. ज. यत्ते ।

**अप्रस्तुतप्रशंसा या सा सैव प्रस्तुताश्रया ॥ ९२ ॥**

अप्राकरणिकस्याभिधानेन प्राकरणिकस्याक्षेपोऽप्रस्तुतप्रशंसा ।

**कार्ये निमित्ते सामान्ये विशेषे प्रस्तुते सति ।**
**तदन्यस्य वचस्तुल्ये तुल्यस्येति च पञ्चधा ॥ ९३ ॥**

तदन्यस्य कारणादेः ।

**क्रमेणोदाहरणानि—**

याताः किं न मिलन्ति सुन्दरि पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सबाष्पे मयि ।

च लाघवे सत्युन्नतपदप्राप्तिः पाते हेतुर्यथा दृषत्कणस्येति दृष्टान्तपर्यवसानान्नि-दर्शनात्वमिति । **अप्रस्तुतेति ।**

प्रशंसा वर्णनम् । सैव अप्रस्तुतप्रशंसैवेत्यर्थः । प्रस्तुताश्रया प्रकृतप्र-तिपत्तिहेतुः । एतच्चालंकारत्वबीजमतिप्रसक्तमिति निवारयति । अप्राकरणिकेन प्राकरणिकाक्षेपोऽप्रस्तुतप्रशंसा प्राकरणिकेनाप्राकरणिकाक्षेपः समासोक्तिरिति विवेकः । तां विभजते—**कार्ये इति ।**

सेत्यनुवर्तते । कार्यादिपञ्चके प्रस्तुते तदन्यस्य कारणादिपञ्चकस्याप्रस्तु-तस्य वर्णनमिति सा पञ्चधेत्यर्थः । तत्र कार्ये प्रस्तुते कारणस्य वर्णनं यथा—**याता इति ।**

---

त्युच्यते । एतच्च क्रिययैवेत्येवकारेण दर्शितम् । अन्ये तु 'स्वहेत्वन्वयस्य' इत्युपलक्षणं स्वक्रियया किंचिदर्थबोधनस्य । एवं च 'चूडामणिपदे धत्ते यो देवं रविमागतं । सतां कार्याऽऽतिथेयीति बोधयन् गृहमेधिनः ॥' इत्यादाव-प्येषैवेत्याहुः। **इति निदर्शना। अप्रस्तुतस्य** । अप्रकृतस्य। **अप्रस्तुतप्रशंसैवेति।** तत्पदवाच्यैवेत्यर्थः । **एतच्चेति ।** अप्रस्तुतप्रशंसनमात्रं समासोक्तावतिप्रस-क्तमिति तद्वारणाय प्रस्तुताश्रयेत्युक्तमित्यर्थः । तदेवोपपादयति—**अप्राकरणि-केनेति ।** प्रस्तुतव्यंजनं प्रस्तुताप्रस्तुतयोरसंबंधे सति नेति तत्संबंधदर्शनमुखेन तां विभजते । **कार्येत्यादि । याता इति ।** (अमरुशतके 'प्रस्थानान्निवृत्तोऽसि किम्' इति मित्रेण पृष्टस्य गमननिवृत्तिहेतुं स्वप्रियावृत्तान्तं कथयतः कस्य-चिदुक्तिः । याताः । गताः ।) न मिलन्ति नायांति । या कृता सा कृतैव पु-

---

1 अप्रस्तुतस्य प्रशंसा इत्युद्योतसम्मतःपाठः ।

लज्जामन्थरतारकेण निपतत्पीताश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ ४८ ॥

अत्र–प्रस्थानात्किमिति निवृत्तोऽसीति कार्ये पृष्टे कारणमभिहितम् ।

राजन्राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ ४९ ॥

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः पलाय्य गताः–इति कारणे प्रस्तुते कार्यमुक्तम् ।

---

अत्र प्रस्थानात्किं निवृत्तोऽसीति कार्ये पृष्टे कारणस्य प्रियाया भाविमरणोत्साहस्य वचनम् । किंशब्दः प्रश्नार्थ इति न कारणप्रस्तावः ।

कारणप्रस्तावे कार्यवचनं यथा—**राजन्निति** ।

अत्र प्रस्थानोद्यतं भवन्तं ज्ञात्वा सहसैव त्वदरयः प्रपलाय्य गता इति शत्रुपलायने कारणे प्रस्तुते तस्य भाषणविशेषरूपं कार्यमुक्तम् ।

---

नर्न कार्येत्याह । पुनरिति । (मत्कृते । मदर्थम् ।) नैव चिता कृतेत्यपलापे तत्कार्यमाह । नितरामिति । गमनानिच्छाज्ञानेन या लज्जा तया मंथरा निष्क्रिया तारका यत्र। लज्जया कस्याप्यनवलोकनात् । धारारूपमश्रु । पीताश्रुणेति पाठे निपतदेव पीतं संवृतं अश्रु यत्रेत्यर्थः । चक्षुष्येकवचनं लज्जया सम्मुखदर्शनविच्छेदाय । हसितेन । मद्गमनेऽप्येतत्प्राणाः स्थास्यंतीति एवं प्रतारयतीति विस्मयप्रयुक्तेन । (शार्दूलविक्रीडितं छन्दः ।) **कार्ये** । निवृत्तिरूपे । अत्रेदमेव प्रस्तुतम् । वर्णनीयत्वात् । अत्राप्रस्तुतेन मरणेनाक्षिप्ताया गमनानिवृत्तेरनुरागोत्कर्षकत्वेनैतस्या अलंकारत्वम् । अत एवोत्तरेण प्रश्नोन्नयनेऽपि नोत्तरालंकारः । तस्य चमत्कारजनकत्वाभावात् । अन्ये द्वयोः समावेशमिच्छंति । **राजन्निति** । (राजानं प्रति कवेरुक्तिः । कुब्जे इति भोजिकायाः सम्बोधनम् ।) कुमाराश्च तत्सचिवाश्च तैः । एषां भोजनसमये शुकस्यापि भोजनलाभात् । ( शून्यायाम् । निर्जनायाम् । वलभौ । उपरिगृहे सौधे । भित्तौ इति वाऽर्थः । शार्दूलविक्रीडितं छन्दः । ) **कार्यमुक्तमिति** । तेन च कारणं व्यजते इत्यर्थः ।

---

१ धाराश्रुणा इत्यपि पाठः उद्योतसम्मतः । २ ट. मुं. पु. तस्याभाषण ।

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं वारिणो
यन्मुक्तामणिरित्यमंस्त स जडः शृण्वन्यदस्मादपि ।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः
कुत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तःशुचा ॥ ५० ॥

अत्रास्थाने जडानां ममत्वसंभावना भवतीति सामान्ये प्रस्तुते विशेषः कथितः ।

सुहृद्वधूबाष्पजलप्रमार्जनं
करोति वैरप्रतियातनेन यः ।
स एव पूज्यः स पुमान्स नीतिमान्
सुजीवितं तस्य स भाजनं श्रियः ॥ ५१ ॥

अत्र कृष्णं निहत्य नरकासुरवधूनां यदि दुःखं प्रशमयसि, तत् त्व-

---

सामान्ये प्रस्तुते विशेषवचनं यथा—**एतदिति** ।

अत्र जडानामस्थल[1] एव ममत्वसंभावना भवतीति सामान्ये प्रस्तुते पुरुषविशेषस्य स ममत्वविशेषोऽभिहितः । विशेषे प्रस्तुते सामान्यवचनं यथा—**सुहृदिति** ।

अत्र श्रीकृष्णं निहत्य नरकासुरवधूनां दुःखं यदि शमयसि तदा त्वमेव

---

अत्र व्यंग्याद्वाच्यस्याधिकचमत्कारकारित्वेन न ध्वनित्वव्यपदेशः । किं त्वलंकारव्यवहार एवेति बोध्यम् । एवमग्रेऽपि । **एतस्येति** । (भल्लटकविकृते भल्लटशतके कस्यचिन्मूर्खस्य वृत्तान्तं कुतश्चिदाकर्ण्य विस्मयेन भाषमाणं कंचित्प्रति कस्यचिदुक्तिः।) मुखात्प्रतारकस्य कस्यचिन्मुखादपगतं शृण्वन् स जडः यन्मुक्तामणिरित्यमंस्त एतत्तस्य कियत् । यतोऽस्मादप्यधिकं किंचिज्जडत्वबोधकमस्ति तदाह । अंगुल्यग्रेति । शनैरादीयमानेऽपि अंगुल्यग्रस्य लघुक्रिययाऽल्पचालनेन प्रविलयिनि अंगुलावेव लग्ने इत्यर्थः । (शृणु अन्यत् इति वा पदच्छेदः । अस्मादपि अन्यत् अधिकं शृणु इत्यर्थः । शार्दूलविक्रीडितं छन्दः।) **ममत्वविशेष इति** । भ्रमविशेष इत्यऽपि बोध्यम् । **सुहृदिति** । जलेति बाहुल्यमूचकम् । वैरप्रतियातनं कृतपीडेषु पीडादानम् । विष्णुना नरकासुरे हते कश्चन तन्मन्त्री नरकासुरसुहृदं ( शाल्वं ) प्रतीदमाह । ( वंशस्थं वृत्तम् । )

---

१ ट. स्थान ।

श्लाघ्यः—इति विशेषे प्रकृते सामान्यमुदितम् ।
तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः—श्लेषः, समासोक्तिः, सादृश्यमात्रं वा तुल्यात् तुल्यस्य ह्याक्षेपे हेतुः । क्रमेणोदाहरणम्—

पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयने न महानपि स्यात् ।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक्प्रकटिता पुरुषोत्तमेन ॥ ९२ ॥

---

श्लाघ्य इति विशेषे प्रस्तुते सामान्यमुक्तम् । तुल्ये प्रस्तुते तुल्याभिधाने त्रयः प्रकाराः । विशेषणविशेष्यवाचिनां सर्वेषामपि श्लिष्टत्वस्य, विशेषणमात्रवाचिनो वा श्लिष्टत्वस्य, श्लेषाभावेऽपि सादृश्यमात्रस्यैव वा प्रकृताक्षेपहेतुत्वात् । आद्यो यथा—**पुंस्त्वादिति** ।

अत्र पुंस्त्वादित्यादिविशेषणानां पुरुषोत्तमेनेति विशेष्यस्य च श्लेषात्सत्पुरुषप्रतिपत्तिः । न च श्लेष एवायम् । 'अवयवशक्तेः समुदायशक्तिर्बलीयसी'

---

**श्लिष्टत्वस्येति** । प्रकाशे श्लेषसमासोक्तिपदे श्लिष्टशब्दश्लिष्टविशेषणपरे । अप्रकृतात् प्रकृताक्षेपे तयोर्भावात् । द्वयोःप्रकृतत्वेऽप्रकृतत्वे वा श्लेषस्य प्रकृतेऽप्रकृतव्यवहारारोपे च समासोक्तेः स्वीकारादिति भावः । **पुंस्त्वादिति** । ( भल्लटकविकृते भल्लटशतके ७९ पद्यमेतत् ) पुंस्त्वं पौरुषं पुंव्यंजनं च । नारीभूय अमृतहरणात् । अधःसंपत् भ्रंशः पातालं च । वराहावतारे पातालं गत्वा पृथिव्युद्धरणात् । प्रणयने याचने । न महान् महत्वरहितोऽल्प इत्यर्थः । बलिप्रार्थने वामनत्वप्राप्त्या जगद्रक्षणात् । विश्वस्योद्धरणं विपद्विनाशनेन रक्षणम् । दिक् प्रकारः । पुरुषोत्तमः पुरुषश्रेष्ठः श्रीकृष्णश्च । ( पुरुषश्रेष्ठपक्षे पुंस्त्वात्प्रचलनं पुरुषार्थहानिः । अधोयानं स्वपदभ्रंशः । अमहत्वं गौरवहानिः । विश्वं सर्वजनमित्यर्थ इत्युदाहरणचन्द्रिका। वसन्ततिलका छन्दः ।) **सत्पुरुषेति** । अप्रकृतस्य श्रीकृष्णस्य प्रतीतौ जातायां पश्चात् प्रकृतेत्यादिः। **न च श्लेष एवेति** । विशेषणविशेष्ययोरुभयोरपि श्लिष्टत्वादिति भावः। **अवयवशक्तेरिति** । न च प्रकरणसत्वे योग एव बलवान्। विश्वोद्धरणरूपपदार्थसामर्थ्यरूपलिंगस्य विष्णावपि सत्त्वात् । एतेन श्लेषमूलो ध्वनिरित्यपास्तम् । ये तु श्लेषस्थले उभयोरप्यर्थयोः क्रमेण शक्त्यैव प्रतिपादनमिच्छंति, तन्मते कथमत्राप्रस्तुतप्रशंसा, अप्रस्तुतेन प्रस्तुतस्याव्यंग्यत्वादत आह ।

येनास्यभ्युदितेन चन्द्र गमितः क्लान्तिं रवौ तत्र ते
युज्येत प्रतिकर्तुमेव न पुनस्तस्यैव पादग्रहः ।
क्षीणेनैतदनुष्ठितं यदि ततः किं लज्जसे नो मना-
गस्त्वेवं जडधामता तु भवतो यद्व्योम्नि विस्फूर्जसे ॥ ८३ ॥
आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन ।
क्षारीकृतं च वडवादहने हुतं च
पातालकुक्षिकुहरे विनिवेशितं च ॥ ८४ ॥

---

इति न्यायात्प्राग्विष्णूपस्थितौ सत्पुरुषस्याक्षेपेणैवोपास्थितेः । श्लेषसत्वेऽप्यप्रस्तुतस्य प्रथमोपस्थित्यैवाप्रस्तुतप्रशंसात्वात् । द्वितीयो यथा—**येनेति ।**
अत्र विशेष्यवाचिचन्द्रपदं न श्लिष्टम् । तृतीयो यथा—**आदायेति ।**
अत्र श्लेषाभावेऽपि सादृश्यमात्रेणासत्पुरुषाक्षेपः । यथा वा मम—

**श्लेषसत्वेऽपीति** । अप्रस्तुतप्रतीत्युत्तरं तन्मूलिका तन्मूलमूलिका वा यत्र प्रस्तुतावगतिस्तत्राप्रस्तुतप्रशंसेति । एकशब्दवत्त्वसाधर्म्यात्परं 'तुल्ये तुल्यस्य' इत्युदाहरणतेति बोध्यम् । **येनासीति** । क्षीणधनः कश्चित् उपजीवनार्थमपकारिणं सधनमनुसरन् केनचिदुपालभ्यते । येनाभ्युदितेन क्लांतिं गमितोऽसीति संबंधः । उदितेनैव न त्वपकृतेनापि । क्लांतिस्तेजोहीनता ग्लानिश्च । प्रतिकर्तुं प्रत्यपकर्तुम् । पादः पदं रश्मिश्च । क्षीणेन धनहीनेन कलाहीनेन च । मनागीषदपि किं न लज्जसे इत्यर्थः । अस्त्वेवं लज्जाशून्यत्वमप्यस्तु । जडधामता हिमाधारता मूढता च । विस्फूर्जसे सगर्वमुदेषि । अमायां सूर्येण सह संगत्य ततस्तेजोग्रहणं चंद्रस्येत्यागमसिद्धं पादग्रहणम् । ( शार्दूलविक्रीडितं छन्दः । ) अत्र श्लिष्टविशेषणमात्रमाहात्म्येन प्रस्तुतसधननिर्धनवृत्तान्ताक्षेपः । **आदायेति** । ( शुकस्य कवेः पद्यमिदमिति शार्ङ्गधरपद्धतौ स्पष्टम् । ) मुखं वदनं नदीसंगमस्थानं च । (अर्जितम् । संपादितम् । दुरर्णवेन । दुष्टेन समुद्रेण । वडवादहने । वडवानले । पातालमेव कुक्षिकुहरं तस्मिन् । वसन्ततिलका छन्दः । ) अत्र ग्रासकल्पं परधनमपहृत्य विफलव्ययकर्तरि

---

१ प्र. गस्त्येवं ।

**यं च काचित् वाच्ये प्रतीयमानार्थानध्यारोपेणैव भवति । यथा—**

**अब्धेरम्भःस्थगितभुवनाभोगपातालकुक्षेः**
**पोतोपाया इह हि बहवो लङ्घनेऽपि क्रमन्ते ।**
**आहो रिक्तः कथमपि भवेदेष दैवात्तदानीं**
**को नाम स्यादवटकुहरालोकनेऽप्यस्य कल्पः ॥ ५९ ॥**

---

कौटिल्यं नयने निवारयतरां शीघ्रां गतिं शीलय
व्यक्तार्थां कुरु भारतीं विहसितेऽप्यौद्धत्यमायोजय ।
कुग्रामप्रमदाविलासरसिकः कांतस्त्वयाऽऽसादितो
नायं नन्दिनि नागरीजनसमाचारैः समाकृष्यते ॥

इयं च त्रिधा—काचिद्वाच्यार्थे प्रतीयमानार्थानध्यारोपमात्रेण । क्वचित्प्रतीयमानार्थाध्यारोपेण । क्वचित्त्वंशभेदेन तदध्यारोपानारोपाभ्याम् ।

तत्राद्या यथा—**अब्धेरिति** ।

---

दुरीश्वरे प्रकृते तत्सदृशस्याप्रकृतस्यार्णवस्य कथनम् । **कौटिल्यमिति**। (नायिकां प्रति सख्या उक्तिः । ' नन्दिनि ' इति नायिकायाः सम्बोधनम् । कौटिल्यम् । वक्रताम् । निवारयतराम् । अतिशयेन निवारय । शीलय । अभ्यस। अभ्यासं विना स्वाभाविकमन्दगमनस्यानिवर्तनात् । भारतीम् । वाचम् । विहसिते । मधुरस्वरसहितहासे । नागरीजनानां समाचाराः व्यवहाराः नेत्रकौटिल्य—मन्दगमन—अस्पष्टार्थभाषण—अनौद्धत्यरूपाः तैः । न समाकृष्यते न वशीक्रियते । शार्दूलविक्रीडितं छन्दः । ) अत्र दुष्प्रभुरत्कविवृत्तान्ताक्षेपः । **अब्धेरिति** । अर्णोऽभः । अंभ इत्येव क्वचित्पाठः । तेन स्थगितास्तिरस्कृतो भुवनस्य भूमेराभोगः विस्तारः पातालकुक्षिस्तन्मध्यं च येन । सर्वपृथिव्या अब्धिप्रतिबंधेनाग्रहणात् तिरस्कारः । जलैर्व्यापनात्पातालकुक्षेरपि सः । पोतोपायाः समुद्रवणिजः । पोतोऽब्धियानम् । क्रमन्ते उत्सहंते । आहो इत्यव्ययं यद्यर्थे । (रिक्तः जलशून्यः ।) अवटः खातः । कुहरं तस्यैव गंभीरभागः । कल्पः समर्थः ।(मन्दाक्रान्ता छन्दः ।) अत्रोपमर्दनशीलस्य दुष्प्रभोः पूर्णतैव वरम्, न रिक्तता, अत्यन्तोपमर्दनापत्तेरिति व्यंग्यं गुणीभूतमेव।अत्र समुद्रेऽपीति पाठः । ध्वनित्वं तु नात्र । इहात्यन्ताप्रस्तुतस्य तत्त्वादेव वर्णनमनुचितमिति तत्पर्यवसानात्तेन स्वस्योचितत्वसिद्धये व्यंग्यार्थस्य बलादाकृष्टत्वेन

---

१ प्र. अब्धेरर्णः इति वा पाठः ।

क्वचिदध्यारोपेणैव । यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाखोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते ।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकरणे मार्गस्थितस्यापि मे ॥ ५६ ॥

क्वचिदंशेष्वध्यारोपेण । यथा—

सोऽपूर्वो रसनाविपर्ययविधिस्तत्कर्णयोश्चापलं
दृष्टिः सा मदविस्मृतस्वपरदिक्किं भूयसोक्तेन वा ।
सर्वं विस्मृतवानसि भ्रमर हे यद्वारणोऽद्याप्यसा-
वन्तःशून्यकरो निषेव्यत इति भ्रातः क एष ग्रहः ॥ ५७ ॥

---

अत्रापुरुषेऽप्येतेऽर्था अबाधिता एवेति नेह प्रतीयमानार्थाध्यारोपः । द्वितीया यथा—**कस्त्वमिति** ।

अत्र वाच्यशाखोटके संबोध्यत्वोच्चारयितृत्वादिकमनुपपन्नमिति प्रतीयमानाध्यारोपः । तृतीया यथा—**सोऽपूर्व इति** ।

---

वाच्यसिध्द्यंगत्वात् । **कस्त्वमिति** । शाखोटकः भूतावासवृक्षः । कस्त्वं भोरिति वृक्षं प्रति प्रश्नः । कथयामीत्यादि तदुत्तरम् । वैराग्यादिवेति पुनः प्रश्नः । साधु विदितमित्युत्तरम् । पुनः प्रश्नः कस्मादिति । इदं वैराग्यम् । वामेन वामभागेन वामाचारेण युक्तश्च । सर्वात्मना छायारोहणशयनादिना । न छायेति । भूतावासत्वेन शाखोटकच्छायानाश्रयणम् । ( शार्दूलविक्रीडितं छन्दः । ) प्रतीयमानोऽत्र प्रकृतासाधुपुरुषः । न चात्र रूपकम् । प्रकृतेऽप्रकृतारोपे एव तत्स्वीकारात् । एतेन शाखोटकवटपदाभ्यां साध्वसाधुपुरुषौ निगीर्याध्यवसितावित्यतिशयोक्तिरित्यपास्तम् । तत्रारोप्यस्यैव प्राधान्येन संबोध्यत्वाद्यनन्वयतादवस्थ्याच्च । विद्यमानाया अप्यतिशयोक्तेरेतदंगत्वाच्च । अत्र सधनः पूज्योऽधनो निन्द्य इति प्रस्तुतव्यंजनम् । नन्वत्राऽप्रस्तुतव्यवहारेण प्रस्तुतव्यवहारस्य निगरणमेवास्तु । किमनया । तात्पर्यानुपपत्तेरपि लक्षणाबीजत्वात् । बोध्यसंबन्धश्च लक्षणा । वाच्यव्यवहाराभेदेन च प्रस्तुतव्यवहारप्रत्यय इति चेन्न । वाच्यार्थताटस्थ्येनैव व्यंग्यप्रतीतेरत्र सहृदयसम्मतत्वात् । शक्यसंबन्धस्यैव लक्षणात्वाच्च । **सोऽपूर्व इति** । ( भल्लटकविकृते भल्लटशतके १८ पद्यमिदम् । ) रसनाविपर्ययो वचनाऽस्थैर्यं विपरीताग्रत्वं च । उपकंठं तद्रसनाग्र-

अत्र रसनाविपर्यासः शून्यकरत्वं च भ्रमरस्य असेवने न हेतुः, कर्णचापलं तु हेतुः, मदः प्रत्युत सेवने निमित्तम् ।

**निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।**
**प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥१४॥**

---

अत्र हस्तिनो रसनाविपर्यासः शून्यकरत्वं मदश्च वाच्यस्य भ्रमरस्य सेवनाभावहेतुत्वेन वाच्यानि, न तद्धेतवः । मदस्तु प्रत्युत सेवने हेतुरिति तदंशे प्रतीयमानपुरुषाध्यारोपापेक्षा । कर्णचापलं तु भ्रमरस्यासेवने हेतुरेवेति तदंशेनाध्यारोप इति । **निगीर्येति** ।

प्रकृतस्योपमेयस्य समेनोपमानेन निगीर्याध्यवसानं द्रढीयसी बुद्धिः सैकाऽ-

---

मिति प्रसिद्धेः । कर्णचापलं परवचनप्रतार्यत्वं अनवरतकर्णचापलं च । मदो गर्वः दानजलं च । स्वपरदिक् आप्तानाप्तविभागः । एतत्सर्वं किं विस्मृतवान् । यत यत इत्यर्थः । निश्चितवानसीति युक्तः पाठः । यत्सेव्यते एष इत्यन्वयः । वारणोऽनुगतवारको हस्ती च । अंतःशून्यकरो निर्धनो मांसादिशून्यमध्यशुंडादंडश्च । (शार्दूलविक्रीडितं छन्दः) **मदश्चेति** । चेन विस्मृतस्वपरदिक्त्वम् । एवं च रसनाविपर्ययादौ वचनास्थैर्यादिकमारोप्य भ्रमरे प्रपन्नसेवकत्वमारोप्य वारणे निवारकप्रभुत्वमारोप्य वाक्यार्थोपपत्तिरिति भावः । **कर्णेति** । एवं चैतदंशे भ्रमरपदं द्विरेफपरमेवेति भावः । ऐकरूप्यायैकवाक्यत्वाय वा तदंशेऽप्यारोप इत्यन्ये । अत्र श्लिष्टशब्दरूपसाधारणधर्मनिबंधनं सादृश्यम् । अत्रेदं बोध्यम् । अप्रस्तुतपदेन मुख्यतात्पर्यविषयीभूतार्थातिरिक्तोऽर्थो ग्राह्यः । एतेन 'किं भृंग सत्यां मालत्यां केतक्या कंटकेद्धया' इत्यत्र प्रियतमेन साकमुद्याने विहरंती काचित् भृंगं प्रत्येवमाहेति प्रस्तुतेन प्रस्तुतांतरद्योतने प्रस्तुतांकुरनामा भिन्नोऽलंकार इत्यपास्तम् । मदुक्तरीत्याऽस्या एव संभवात् ।(यदा)मुख्यतात्पर्यविषयः प्रस्तुतश्च नायिकानायकवृत्तांततदुत्कर्षकतया गुणीभूतव्यंग्यस्तदाऽत्र सादृश्यमूला समासोक्तिरेवेति केचित् । अन्ये तु अप्रस्तुतेन प्रशंसेत्यपि अप्रस्तुतप्रशंसाशब्दार्थः । एवं च वाच्येन व्यक्तेन वा अप्रस्तुतेन वाच्यं व्यक्तं वा प्रस्तुतं यत्र सादृश्याद्यन्यतमप्रकारेण प्रशस्यते उत्कृष्यते इत्यर्थादत्रापीयमेवेत्याहुरिति दिक् । **इत्यप्रस्तुतप्रशंसा** । **द्रढीयसीति** । स्वासाधारणधर्मेणानुपादानादना-

१ प्र. समेन ।

**कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।**
**विज्ञेयाऽतिशयोक्तिः सा**

उपमानेनान्तर्निगीर्णस्योपमेयस्य यदध्यवसानं सैका । यथा—

**कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।**
**सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥ ५८ ॥**

---

तिशयोक्तिः । यच्च तदेव वस्त्वन्यत्वेन विविक्ताकारवस्त्वन्तरत्वेनाध्यवसीयते सा द्वितीया । यच्च चेच्छब्देन यदिशब्देन वा यद्यर्थोक्तौ कल्पनमर्थादसंभविनोऽर्थस्य सा तृतीया । यश्च कारणकार्ययोः प्रसिद्धस्य पौर्वापर्यस्य विपर्ययो वैपरीत्यं कारणस्य शीघ्रकारिताप्रतीतये सा चतुर्थीति चतस्रोऽतिशयोक्तयः । तत्राद्या यथा—**कमलमिति** ।

---

हार्याऽभेदधीरित्यर्थः । गौणसाध्यवसानामूलेयम् । **तदेवेति** । एवकारेण धर्मिभेदाभावः सूचितः । **अन्यत्वेनेति** । तच्चान्यादिशब्दैः । **विविक्ताकारम्** । अतिशयिताकारम् । **कमलमिति** । ( प्रियां दृष्ट्वा तत्सखीं प्रति नायकस्योक्तिः। ) कमलं कांतावक्त्रम् । अनम्भसि निर्जलदेशे । कुवलये नीलोत्पले नेत्ररूपे । तानि, कुवलये द्वे कमलं च । कनकलतिका कांतातनुः । (सुकुमारा मृद्वी चासौ सुभगा सुंदरी । आर्या छन्दः।) अत्र प्रकरणलभ्यनायिकावक्त्रादीनां कमलादितादात्म्येनाध्यवसानान्मुखादेरतिशयः । अत्रोपमानतादात्म्यमुपमेये । अत्र केचित् । ' प्रकृतस्य परेण ' इत्येव प्रकाशे पाठदर्शनात् तत्र च सामान्यतो निर्देशात् शुध्यसाध्यवसानलक्षणया धर्मधर्मिणोरेकत्वाध्यवसायेऽप्येषा । ' समेन ' इति पाठेऽपि तदुपलक्षणम् । यथा ' कर्णलंबितकदंबमंजरीकेशरारुणकपोलमंडलम् । निर्मलं निगमवागगोचरं नीलिमानमवलोकयामहे ' इत्यत्र नीलिमपदस्य तदाश्रये शुद्धसाध्यवसानलक्षणया नीलिमाऽभेदप्रतीतिः । एवं हेतुफलयोरभेदाध्यवसायेऽप्येषा । यथा 'वित्रासनं समरसीमनि शात्रवाणामाजीवनं विबुधपर्षदि कोविदानाम् । संमोहनं सुरतसंसदि कामिनीनां रूपं तदीयमवलोकयतोऽद्भुतं मे' इत्यादौ वित्रासनादिपदस्य तद्धेतौ शुद्धसाध्यवसाना । एतेन ' हेतोर्हेतुमता सार्धमभेदो हेतुरुच्यते ' इति हेत्वलंकारोयं पृथगित्यपास्तमित्याहुः । अत्र भेदेऽभेदः । अत्र कमलादिपदानां मुखत्वं लक्ष्यतावच्छेदकम् । तेन रूपेण प्रथमतो बोधे तद्धर्मावच्छिन्ने कमलाभेदप्रत्ययो व्यंजनया । बाधबुद्धेश्च

---

१ ट. ठ. प्रतीयते ।

**अत्र मुखादि कमलादिरूपतयाऽध्यवसितम् ।**
**यच्च तदेवान्यत्वेनाध्यवसीयते, सा अपरा यथा—**

**अण्णं लडहत्तणअं अण्णा विअ का वि वत्तणच्छाआ ।**
**सामा सामण्णपआवइणो रेह च्चिअ ण होई ॥ ५९ ॥**

---

अत्र मुखादि कमलादित्वेनाध्यवसितम् । यथा वा मम—

कलशे परममहत्त्वं तिमिरस्तोमस्य सोमसहवासः ।
वियति च शैवलवल्ली शिव शिव कुसुमेषुसर्गसौभाग्यम् ॥

द्वितीया यथा—**अण्णमिति** ।

---

न व्यांजनिके प्रतिबंधकत्वमित्यनाहार्या धीरत्रेति केचित् । आल्हादकत्वेनैव मुखं लक्ष्यं, शेषं प्राग्वत्, इत्यपरे । अत्र पक्षे तद्धर्मावच्छिन्ने कमलाभेद-बाधस्यैवाभावादनाहार्यत्वं स्पष्टमेव । अन्ये तु शक्यतावच्छेदकरूपेणैव मुखादिभानं वदंति । तन्मतेऽभेदप्रधानातिशयोक्तिरित्यस्य उपमानतावच्छेदकस्यैव भेदाभावरूपतया निर्वाहः । एतदेव चात्र मते निगरणम् । यत्स्ववाचकपदेन शक्यतावच्छेदकरूपेणैवास्य बोधनम् । सादृश्यातिशयमहिम्ना च बाधबुद्धेःस्थगनादेतन्मतेऽप्यनाहार्यैव धीरिति दिक् । ( **कलशे इति** । कलशे । स्तने । तिमिरस्तोमस्य । केशसंघातस्य । सोमसहवासः । मुखसहवासः । वियति । मध्यदेशे । शैवलवल्ली । रोमावली । कुसुमेषुः । मदनः । गीतिछन्दः । **अण्णमिति** । ) अन्यत्सौकुमार्यमन्यैव च काऽपि वर्तनच्छाया । श्यामा सामान्यप्रजापते रेखैव च न भवति । सुकुमारशब्दस्य लडहादेशः । ( वर्तते जीवतीति ) वर्तनं शरीरम् । छाया कांतिः । श्यामा शीतोष्णकाले उष्णशीता । ( शीतकाले भवेदुष्णा ग्रीष्मे च सुखशीतला । सर्वावयवशोभाढ्या सा श्यामा परिकीर्तिता । ) सामान्यप्रजापतेः सर्वसाधारणप्रजापतेः । रेखा निर्मितिः । ( आर्या जघनविपुला । ) अत्रान्यदेव सौकुमार्यमित्युक्त्याऽस्याः सौंदर्ये सौंदर्यांतरादतिशयः प्रतीयते । अत्राभेदे भेदः । अत्रेदं बोध्यम् । 'प्रस्तुतस्य यदन्यत्वम्' इत्यस्य प्रस्तुतस्य अन्यवस्तुत्वेनाध्यवसाय इत्यप्यर्थः । यथा 'तस्याः सखे नियतमिंदुसुधामृणालज्योत्स्नादि कारणमभून्मदनश्च वेधाः' इत्यत्र प्रकृतनायिकासंबंधिकारणस्य निर्मातुश्च विविक्ताकारवस्त्वंतररूपमृणालादित्वेनाध्यवसानम् । 'अस्याः सर्ग-' इत्यादौ तु नैवम् । निश्चयाभावात् । यथा वा 'प्रत्यंभो नवपुंडरीकमु

'यद्यर्थस्य' यदिशब्देन चेच्छब्देन वा उक्तौ यत् कल्पनम् ( अर्थात असंभविनोऽर्थस्य ), सा तृतीया । यथा—

राकायामकलङ्कं चेदमृतांशोर्भवेद्वपुः ।
तस्या मुखं तदा साम्यपराभवमवाप्नुयात् ॥ ६० ॥

---

स्पष्टम् । तृतीया यथा—**राकायामिति** ।

कुलश्रेणी प्रतिक्ष्माधरं पूर्णेंदोरुदयः प्रतिक्षितिरुहं मल्लीप्रसूनोत्करः। किंचान्यत्कंथ- 'धत्ते नीर जगतीरालिपति त्वद्यशोविस्तारे प्रतिदेशमेव दिविषत्स्रोतस्वतीनिर्भरः । अत्रैकैव कीर्तिस्तत्तत्स्थाने योग्यतावशात्तेन तेन रूपेणाध्यवसिता। यथा वा 'स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ' इति । अत्र निमित्तभेदात्तत्तद्रूपेणाध्यवसायः । स च कविनिबद्धकर्तृक इत्यन्यत् । 'गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने ' इत्यत्रापीयमेव । अत्र श्लेषसंकीर्णेयमित्यन्यत् । एतेनेदृशेषु विषयेषु उल्लेखालंकारोऽयमतिरिक्त इति केषांचिदुक्तिः परास्ता । ' गजत्रातेति वृद्धाभिः श्रीकांत इति यौवतैः । यथास्थितश्च बालाभिर्दृष्टः शौरिः सकौतुकम् ' इत्यत्र तु नायमलंकारः । अध्यवसानाभावात् । न चैवं कोऽत्रालंकारः । न कोपि । किंतु तेषां तथाज्ञानानि भगवद्विषयकभावे उद्दीपनानीति बोध्यम् । नह्युद्दीपनसंसारः सर्वोऽप्यलंकारेष्वेवेति नियमोऽस्ति । एवम् ' अकृशं कुचयोः कृशं वलग्ने' इति पद्येऽपि बोध्यम् । **राकायामिति** । (अमृतांशोः चन्द्रस्य । साम्यं सादृश्यमेव पराभवः। निरुपमस्योपमानसंभव एव पराभवः।) पूर्वार्धे पूर्णेन्दौ कलंकाभावस्यासंबंधे संबंधः कल्पितः। उत्तरार्धे साम्यसंबंधसंभवेऽपि तदसंबंधः पराभवपदेन सूचितः। एवं चासंबंधे संबंध इति द्विविधेयम् । यद्यर्थोक्ताविल्युपलक्षणमुक्तप्रकारद्वयस्य। एवं च 'सौधाट्टानि पुरस्यास्य स्पृशंति विधुमंडलम्' इत्यत्राप्यसंबंधे संबंधरूपा इयमेव । यत्त्वत्र 'स्पृशंतीवेंदुमंडलम्' इति कृते उत्प्रेक्षाप्रतीतेरिवाभावे गम्योत्प्रेक्षैवोचिता । अन्यथा ' त्वत्कीर्तिर्भ्रमणश्रांता विवेश स्वर्गनिम्नगाम् ' इति त्वदुक्तेऽपि गम्योत्प्रेक्षा न स्यात् इति तन्न । नूनं मुखं चंद्र इत्यादौ नूनपदाभावे गम्योत्प्रेक्षाया आपत्तेः । रूपकस्यानापत्तेश्च । त्वत्कीर्तिरित्यत्र बहुदूरगमने स्वर्गगमने वा स्वर्गगाप्रवेशतादात्म्योत्प्रेक्षायाः कीर्तौ स्वर्गगाप्रवेशकर्तृत्वोत्प्रेक्षाया अनंगीकारे भ्रमणश्रांतत्वरूपविशेषणवैयर्थ्यवत्प्रकृते उत्प्रेक्षासाधकाभावाच्च । स्वर्गसंबंधित्वरूपानुपात्तधर्मनिमित्तेयम्। अंत्ये स्वर्गगमनरूपानुपात्तधर्मनिमित्तेति दिक् । राकायामित्युदाहरणे व्यतिरेकालंकार-

कारणस्य शीघ्रकारितां वक्तुं कार्यस्य पूर्वमुक्तौ चतुर्थी। यथा—

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता॥ ६१॥

प्रतिवस्तूपमा तु सा॥ १५॥
सामान्यस्य द्विरेकस्य यत्र वाक्यद्वये स्थितिः।

साधारणो धर्मः उपमेयवाक्ये उपमानवाक्ये च (कथितपदत्वस्य दुष्टतयाऽभिहितत्वात्) शब्दभेदेन यत् उपादीयते, सा (वस्तुनो वा-

---

चतुर्थी यथा—हृदयमिति। प्रतिवस्तूपमेति।

एकस्य सामान्यस्य साधारणधर्मस्य वाक्यद्वये उपमानोपमेयवाक्ययोर्यन्न द्विरवस्थितिः। अर्थाच्छब्दभेदेन। अभिन्नस्य पदस्य दुष्टत्वात्। सा प्रतिवस्तूपमा। वस्तुनो वाक्यार्थस्योपमानत्वात्। अत्र 'द्विः' 'द्वये' इत्यनेकोपलक्षकं। मालागर्भेयम्। एवं 'लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः स्वच्छंदं चरतो जनस्य हृदये चिताज्वरो निर्मितः। एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता' इत्यत्रापि 'एषापि स्वगुणानुरूपरमणाभावात्' इत्यत्रासंबंधे संबंधस्तन्वीलावण्यप्रकर्षप्रतिपादनार्थ उक्तः। चतुर्थी। कार्यकारणयोः पौर्वापर्यविपर्ययरूपा। विपर्ययः कार्यस्य प्राथम्येन सहभावेन च। तत्राद्यमाह। हृदयमिति। (दामोदरगुप्तकृते कुट्टनीमते ९६ पद्यमिदम्। कुसुमान्येव चापा बाणाश्च यस्य तेन मदनेन मालत्याः मालतीनाम्न्या नायिकायाः हृदयम् आदौ पूर्वं अधिष्ठितम्। चरमं पश्चात्। लोचनविषयं नेत्रगोचरताम्। भजता प्राप्नुवता। दृष्टेनेति यावत्। त्वया आक्रांतम्। आर्या छन्दः)। अत्र कारणस्य कांताधिष्ठानस्य शीघ्रकारित्वं वक्तुं कार्यस्य कंदर्पाधिष्ठानस्य प्रथममुक्तिः। अंत्यं यथा। 'सममेव समाक्रांतं द्वयं द्विरदगामिना। तेन सिंहासनं पित्र्यं मण्डलं च महीभृताम्॥' इत्यत्र सममेव न तु पूर्वापरभावेनेति प्रतीतेः। सिंहासनाक्रमणं कारणम्। महीभृन्मण्डलाक्रमणं कार्यम्। इत्यतिशयोक्तिः। एकस्येति। तेन निदर्शनादृष्टांतयोर्व्युदासः। तत्र बिंबप्रतिबिंबभावेन निर्देशेनैकत्वविरहात्। अत्रास्थितिः। उपादानम्। प्रतिवस्तु प्रतिवाक्यार्थमुपमा समानधर्मोऽस्यामिति व्युत्पत्तेः। तदाह। वस्तुन इति। एवं चोपमेयत्वमपि वाक्यार्थस्येति ध्वनितम्। न च 'दिवि स्थितो भानु-

**क्यार्थस्योपमानत्वात ) प्रतिवस्तूपमा । यथा—**

**देवीभावं गमिता परिवारपदं कथं भजत्येषा ।**
**न खलु परिभोगयोग्यं दैवतरूपाङ्कितं रत्नम् ॥ ६२ ॥**

नुरोधात् । सा च द्विधा—अमालारूपा मालारूपा च ।

तत्राद्या यथा—**देवीति ।**

अत्र परिवारपदत्वपरिभोगयोग्यत्वयोरनर्थान्तरत्वादुदाहरणत्वमित्येके ।'कथं भजति' 'न खलु' इत्यनयोरेकार्थतया तथात्वमित्यपरे । अन्त्या यथा—

---

रिव भूस्थस्त्वं भ्राजसे नृप' इति वाक्यार्थोपमायामतिव्याप्तिरिति वाच्यम् । वस्तुप्रतिवस्तुभावापन्नसाधारणधर्मकं वाक्यार्थयोर्गम्यमौपम्यमित्यस्य विवक्षितत्वात् । तत्र तु इवशब्देन वाच्यमेवेत्यदोषात् । 'निर्मलं वदनं कांते विमलं कमलं मम' इत्यादावतिप्रसंगवारणाय वाक्यार्थयोरिति । अत एव 'आननं मृगशावाक्ष्या वीक्ष्य लोलैलकैा वृतम् । भ्रमद्भ्रमरसंभारं स्मरामि सरसीरुहम् ।' इति स्मरणालंकारेऽपि नातिव्याप्तिः । पद्मसदृशमाननमित्येव तत्र प्रतीतेः । 'आपद्गतः खलु महाशयचक्रवर्ती विस्तारयत्यकृतपूर्वमुदारभावम् । कालागुरुर्दहनमध्यगतः समंताल्लोकोत्तरं परिमलं प्रकटीकरोति' इत्यत्रापद्गतत्वदहनमध्यगतत्वयोर्बिंबप्रतिबिंबभावेऽपि । उपमानोपमेयवृत्तिधर्मो वस्तुप्रतिवस्तुभावापन्न एव । दृष्टांते तु साक्षात्तद्वृत्तिधर्मांशेऽपि बिंबप्रतिबिंबभाव इति ततो विशेषः । एकस्यैव धर्मस्य पृथक्शब्दाभ्यामुपादानं वस्तुप्रतिवस्तुभावः । ( **देवीति ।** राजानं प्रति देवीसख्या उक्तिः । देवीभावम् देवीत्वम् ।) देवी कृताभिषेका । (गमिता प्रापिता ।) परिवारपदम् साधारणकलत्रपदम् । परिभोगो भूषाद्यर्थमुपादानम् । दैवतेति । स्वर्णादिघटितप्रतिमेत्यर्थः । ( आर्या छन्दः ।) **इत्येके इति ।** अत्रारुचिस्तु तयोर्वाक्यार्थगतसादृश्यरूपत्वाभावः । **एकार्थतयेति ।** अनौचित्यरूपैकार्थतयेत्यर्थः । एवं च दैवतरूपांकितरत्नस्य भोगयोग्यत्वं यथानुचितं तथा देव्याः परिवारपदयोग्यत्वमनुचितमित्यौपम्ये पर्यवसानम् । ननु यथा 'पर्वत एतद्वन्हिमान् एतद्धूमात्' इत्यत्र महानसस्य दृष्टांतताऽनुचिता । एवम् 'एषा परिवारपदत्वायोग्या देवीत्वात्' इत्यत्र दैवतरूपांकितरत्नस्य दृष्टांतताऽनुचितेति चेन्न । तेन तद्वृत्तिसामान्यधर्मावच्छिन्नयोर्व्याप्तिसिद्धौ 'यत्सामान्ययोर्व्याप्तिस्तद्विशेषयोः' इति न्यायेनोक्तविशेषनियमसिद्धेरदोषात् । नियमविशेषरहितकेवलार्थमात्रस्य प्रकृतत्वे तु अप्रकृतवाक्यार्थनिरूपितमौपम्यमात्रं गम्यम् ।

**यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।**
**लवणमम्बु सदैव महोदधेः प्रकृतिरेव सतामविषादिता ॥ ६३ ॥**

इत्यादिका मालाप्रतिवस्तूपमा द्रष्टव्या । एवमन्यत्राप्यनुसर्तव्यम् ॥

**दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिबिम्बनम् ॥ १६ ॥**

एतेषां साधारणधर्मादीनाम्, दृष्टोऽन्तः (निश्चयो) यत्र स दृष्टांतः ।

---

**यदीति ।**

अत्र किमद्भुतमित्यादिभिरद्भुताभावस्य वाक्यचतुष्टयेऽप्युपादानान्मालात्वम् । चतुर्थवाक्यं चोपमेयवाचि । **दृष्टान्त इति ।**

एतेषामुपमानोपमेयसाधर्म्याणां सर्वेषां प्रतिबिम्बनं दृष्टान्तः । दृष्टोऽन्तो निश्चय उपमानिर्वाहकोऽत्रालंकारे इति व्युत्पत्तेः । स च द्विधा—साधर्म्यवैधर्म्यरूपाभ्याम् । तत्र साधर्म्येण यथा—

---

यथा 'भैरभ्रे भासते चंद्रो भुवि भाति भवान्बुधैः' इति दिक् । वैधर्म्येणाप्येषा दृश्यते । 'वंशभवो गुणवानपि संगविशेषेण पूज्यते पुरुषः । न हि तुंबीफलविकलो वीणादंडः प्रयाति महिमानम्' इत्यादौ । यद्यपि अत्र पुरुषः पूज्यत्ववान्संगविशेषवत्त्वादित्यर्थे तुंबीफलवैकल्यप्रयुक्तमहिमाभावविशिष्टो वीणादंडो न दृष्टांतस्तथाप्यनेन दृष्टांतेन संगविशेषाभावप्रयोज्यपूज्यत्वाभाववानिति तद्व्यतिरेक आक्षिप्यते । तत्र पूर्वोक्तरीत्या एकविशेषेऽपरविशेषस्य दृष्टांतत्वाभावात्तद्वृत्तिसामान्यावच्छिन्नव्यतिरेक आक्षिप्यते । सिद्धे च तस्मिन्नुपात्तविपरीतदृष्टांतेन तादृशसामान्यान्वयनियमसिद्धौ यत्सामान्ययोरिति न्यायात्तादृशविशेषावच्छिन्नकाव्योक्तान्वयनियमसिद्धिः । एवं च तुंबीफलराहित्यवद्वीणादंडसदृशः संगविशेषाभाववान्पुरुष इति बोधः । तुंबीफलवद्वीणादंडसदृशः संगविशेषवान्पुरुष इति च बोधः । **यदीति ।** किमद्भुतं स्वाभाविकत्वान्नाद्भुतमित्यर्थः । किं ततः सदैवेत्यनयोरप्येवम् । सतामविषादिता ( विषादराहित्यं ) प्रकृतिरेव । स्वभाव एव नाश्चर्यमित्यर्थः । ( द्रुतविलंबितं वृत्तम् । ) **इति प्रतिवस्तूपमा । प्रतिबिंबनम् ।** बिंबप्रतिबिंबभावः । न त्वेकत्वमित्यर्थः । अत एव प्रतिवस्तूपमातो भेदः । नचात्रोपमा । यथेवादिशब्दाभावात् । नाप्यर्थांतरन्यासः । सामान्यविशेषभावाभावात् । दृष्टांतपदयोगमाह । **दृष्ट इति ।** गृहीतप्रामाण्यक इत्यर्थः । **निश्चयः ।** दार्ष्टांतिकवाक्यार्थनिश्चयः । दृष्टांतवाक्यार्थे गृहीतसहचारेण दार्ष्टांतिकार्थे-

त्वयि दृष्ट एव तस्या निर्वाति मनो मनोभवज्वलितम् ।
आलोके हि हिमांशोर्विकसति कुसुमं कुमुद्वत्याः ॥ ६४ ॥

एष साधर्म्येण । वैधर्म्येण तु—

तवाहवे साहसकर्मशर्मणः करं कृपाणान्तिकमानिनीषतः ।
भटाः परेषां विशरारुतामगुर्दधत्यवाते स्थिरतां हि पांसवः ॥ ६५ ॥

---

**त्वयीति ।**

अत्र साधर्म्यस्यापि प्रतिबिम्ब एवेति प्रतिवस्तूपमाभेदः । वैधर्म्येण यथा—

**तवेति ।**

वैधर्म्यविपर्यये साधर्म्यपर्यवसानमिति दृष्टान्तालंकारत्वम् ।

---

प्रामाण्यनिश्चयात् । **त्वयीति** । ( नायिकासख्याः नायकं प्रत्युक्तिः । ) दृष्ट एव दृष्टमात्रे । तस्याः । मालविकायाः (?) । ( निर्वाति । उच्छ्वसिति । प्रसन्नं भवति । आर्या छन्दः । ) अत्र पद्ये त्वयीत्यत्र सप्तमीनिर्देशाद्धिमांशोरित्यत्र षष्ठीनिर्देशाच्च मनोभवज्वलितप्रतिनिर्देशस्य रविकिरणज्वलितत्वस्यानुक्त्या न्यूनत्वाच्चासंष्ठुलमिदं पद्यम् । अत्र नृपचंद्रयोर्नायिकाकुमुद्वत्योर्मनःकुसुमयोर्मनोभवज्वलितसूर्यकरज्वलितयोः निर्वाणप्रकाशयोश्च बिंबप्रतिबिंबभावः । कुमुद्वत्याः कुसुमस्य हिमांशुदर्शने विकास इव तस्या मनसस्त्वद्दर्शने उछ्वास इति प्रतीयमानोपमायां मनःकुसुमयोर्बिंबप्रतिबिंबभावापन्नयोः साधारणधर्मत्वम् । अत्र नृपदर्शनमनोभवज्वलितप्रकाशयोः कार्यकारणभावनिश्चयो ' यद्यदन्वयानुविधायि तत्तज्जन्यम् ' इति व्याप्त्या दृष्टांतगृहीतसहचारनिश्चयप्रयुक्तया भवतीत्यर्थसंगतिः । न च हिमांशोरालोके यथा कुमुद्वतीकुसुमं विकसति तथा त्वयि दृष्टे तस्या मनो हृष्यतीति उपमां विना पूर्वोत्तरार्धयोरसंबंधान्निदर्शनासंकरः । तत्र साधारणधर्मानुपन्यासात् । अत्र वाक्यार्थयोः स्वस्वार्थे निरपेक्षत्वात् । निदर्शनायां तत्रापि सापेक्षत्वाच्च । **वैधर्म्येण** । विपर्यये साधर्म्यपर्यवसायिना । (तवेति ।) आहवे युद्धे । साहसकर्मणः सकाशात् शर्म यस्य । (कृपाणः । खड्गः । भटाःयोद्धारः।) विशरारुताम् । झटिति नश्वरताम् । (अगुः । प्रापुः । अवाते । निर्वातदेशे । पांसवः । रजांसि । वंशस्थं वृत्तम् । ) **वैधर्म्यविपर्यये** । वाते तु न तथेत्येवंरूपे । अत्राहववातसंबंधिभं-

---

१ छ. झ. कुमुदं । २ प्र. ज. पाणि । ३ ट. विपर्ययेण ।

**सकृद्वृत्तिस्तु धर्मस्य प्रकृताप्रकृतात्मनाम् ।**
**सैव क्रियासु बह्वीषु कारकस्येति दीपकम् ॥ १७ ॥**

प्राकरणिकाप्राकरणिकानाम् ( अर्थात् ) उपमानोपमेयानाम्, धर्मः क्रियादिः, एकवारमेव यत् उपादीयते, तत् ( एकस्यैव समस्तवाक्यदीपनात् ) दीपकम् । यथा—

किवणाणँ धणं णाआणँ फणमणी केसराइँ सीहाणं ।
कुलवालिआणँ थणआ कुत्तो छिप्पन्ति अमुआणम् ॥ ६६ ॥

**सकृदिति ।**

प्रकृताप्रकृतात्मनामर्थादुपमानोपमेयभूतानां धर्मिणां धर्मस्य क्रियादेः सकृद्वृत्तिरेकवारमेवोपादानं यत्तदेकम् । एकस्थस्यैव सर्ववाक्यदीपकत्वेन प्रदीपसाम्यात् । कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिरेव द्वितीयं, दीपकम् । इतिशब्दः प्रकारे । तेनोक्तप्रकारद्वयवद्दीपकमित्यर्थः । आद्य यथा—

**किवणाणमिति ।**

गुरुत्वास्थिरत्वयोरुपमानोपमेयभाव इति दिक् । इति **दृष्टांतः । अर्थादिति**।प्रकृताप्रकृतयोः सजातीयधर्मसंबंधस्योपमायां पर्यवसानात् । सा च व्यंग्यैव वाचकविरहात् । व्यंग्याया अप्यस्या वाच्योपकारकत्वात् गुणीभूतव्यंग्यत्वमेव । न तु ध्वनित्वम् । अतोऽत्र नोपमाशंका । **क्रियादेरिति** । आदिना गुणादिसंग्रहः । **एकस्थस्येति**।एकत्र तिष्ठति तस्येत्यर्थः। **साम्यादिति**।दीप इव दीपकम्।संज्ञायां कन्। प्रकृताप्रकृतप्रकाशकत्वेन च सादृश्यम् । **किवणाणमिति**।'कृपणानां धनं नागानां फणमणिः केशराश्च सिंहानाम् । कुलपालिकानां च स्तनाः कुतः स्पृश्यन्तेऽमृतानाम्॥' (कुलपालिकानाम् । कुलवधूनाम् । अमृतानाम् । सचेतनानाम् । एतत् कृपणानामित्यादिभिरन्वेति। गाथा मुखविपुला।) **उपमेया इति**। प्रकृतत्वात्। अन्येषां तूपमानत्वम् ।अत्र तत्तदुपमानैः प्रत्येकमौपम्यप्रतीतिः। अत्र क्रिया साधारणधर्मः। गुणो यथा । ' श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपंक्तिभिः । भुवश्च सुकुमाराभिर्नवशाद्वलपंक्तिभिः ॥ ' इति । यत्तु ' वर्षत्यंबुदमालेयं वर्षत्येषा च शर्वरी । उन्मीलन्ति कदंबानि स्फुटन्ति कुटजोद्गमाः॥माद्यंति चातकास्तृप्ता माद्यन्ति च शिखावलाः।' इत्यादावावृत्तिदीपकम् । क्वचिच्छब्दस्यार्थस्योभयोर्वा आवृत्तेरिति। **तन्न**।धर्मस्य सकृदुपादानाभावात्।प्रकृताप्रकृतोभयावृत्तित्वाच्च।एषु च वा-

कारकस्य च बह्वीषु क्रियासु सकृद्वृत्तिर्दीपकम् । यथा—

स्विद्यति कूणति वेल्लति विवलति निमिषति विलोकयति तिर्यक् ।
अन्तर्नन्दति चुम्बितुमिच्छति नवपरिणया वधूः शयने ॥९७॥

**मालादीपकमाद्यं चेद्यथोत्तरगुणावहम् ।**

पूर्वेण पूर्वेण वस्तुना उत्तरमुत्तरं चेदुपक्रियते, तत् मालादीपकम् । यथा—

**सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते**
**देवाकर्णय येन येन सहसा यद्यत्समासादितम् ।**

---

अत्र छिप्पन्तीति सकृदुपात्तम् । कुलपालिकानां स्तना उपमेयाः । अन्त्यं यथा—**स्विद्यतीति** ।

अत्र वधूरिति कारकस्य सकृद्वृत्तिः । **मालेति** ।

गुणावहमुपकारकम् । यथा—**संग्रामेति** ।

नकलुषोपमैवेत्याहुः प्रकाशानुसारिणः। **अंत्यम्**। बह्वीषु क्रियासु कारकस्य सकृद्वृत्तिरित्येतत् । ' कारकस्य क्रियासु ' इत्युक्त्या क्रिया तिङन्तादिवाच्याऽसत्वभूता गृह्यते । असत्वभूतायाश्चोपमानत्वाभावः सन्सूत्रे भाष्ये ' न वै तिङन्तेनोपमानमस्ति ' इति ग्रंथेन प्रतिपादित इति । अत्रोपमानोपमेयभावाप्रतीतिः,पूर्वस्मिंस्तु तत्प्रतीतिरिति भेदः ।एककर्तृकत्वादिधर्मकृतसादृश्यस्याचमत्कारित्वाच्च। इदं च प्रकृतानामेव अप्रकृतानामेव प्रकृताप्रकृतानां च । अनेकचमत्कारिक्रियावैशिष्ट्येन वर्ण्यकारकोत्कर्षकतया चमत्कारित्वेनास्यालंकारत्वम् । एतेन दीपके सर्वत्रौपम्यस्य गम्यत्वादस्य दीपकत्वं चित्यम् । स्विद्यतीत्युदाहरणे क्रियाणां सादृश्यावगतावपि सर्वासां प्रकृतत्वात्कारकतुल्ययोगितात्वमेवोचितमिति च परास्तम् । तुल्ययोगिता त्वौपम्यगर्भैवेति वक्ष्यते। **स्विद्यतीति ।** स्वेदः सात्विको भावः। दयिते परिरंभोद्यते कूणति मृदुशब्दं करोति।ततोऽप्यनिवर्तिनि वेल्लति संकोचमालंबते। विचलति परिवृत्य शेते । निमिषति मृषा नेत्रे मुद्रयति।अंतः नवोढात्वेन बहिरप्रकाशात्।चुंबितुमिच्छति न तु चुंबति।(गीतिश्छन्दः । ) **अत्र वधूरिति** । शयने इत्यपि बोध्यम् । **यथोत्तरेति** । अस्य वीप्सितत्वादाद्यमित्यत्रापि वीप्सा बोध्या। (**संग्रामेति**। खण्डप्रशस्तौ पद्यमिदम् ।

---

१ प्र. ज. सम्प्राप्ते परिपन्थियोधनिवहे सांमुख्यमासादितम् ।

कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम् ॥६८॥

**नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ॥ १८ ॥**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा। क्रमेणोदाहरणम्—

पाण्डु क्षामं वदनं हृदयं सरसं तवालसं च वपुः।

---

स्पष्टम्। मालोपमादीनां बहूपमानसंबन्धान्नापरो विशेष इति न ते लक्षिताः। इदं तु पृथग्लक्षितम्। उत्तरोत्तरमुपकार्योपकारकतया परस्परसंसर्गेण मालाभावमापन्नानां सकृद्धर्मनिर्देशरूपत्वेनाधिकविशेषानुप्रवेशादिति। **नियतानामिति।**

नियतानां प्राकरणिकानामेव अप्राकरणिकानामेव वा। धर्म इत्यनन्तरं 'यदुपादीयते' इति शेषः। सकृत्पदोपादानाद्यत्र प्रतिस्वं भिन्ना धर्मा एकस्यैव वा सर्वत्रोपादानं तत्र नातिप्रसङ्गः। तत्र प्राकरणिकानामेव यथा— **पाण्डिति।**

---

संग्रामरूपांगणगतेन। निर्भयसंचरणीयत्वेनांगणता। चापे समारोपिते ज्याविशिष्टे कृते इत्यर्थः। शार्दूलविक्रीडितं छन्दः) । अभवन्मतयोगदोषपरिहाराय संप्राप्ते इत्यादि पाठांतरकल्पनम्। आसादितमिति नपुंसकानपुंसकयोरेकशेषः एकवत्त्वंच। अत्र कोदंडेनारिशिरः प्रापयता शरा उपक्रियंते, शरैरपि भूमंडलं प्रापयद्भिररिशिरः, शिरसाऽपि सन्नायकं त्वां लंभयता भूमंडलं, भूमंडलेन च कीर्तिमासादयता नृपतिः, नृपेणाऽपि त्रैलोक्यं व्यापयता कीर्तिः, इति पूर्वपूर्वेभ्यः परस्य परस्योपकारः। एकस्या आसादनक्रियायाः संबंधाद्दीपकता। अत्र शरादीनामरिशिरःप्रभृतीनां च सादृश्यमपि व्यंग्यम्। **इति दीपकम्। प्राकरणिकानामेवेति।** एवं च प्राकरणिकाप्राकरणिकोभयावृत्तित्वे सति औपम्याक्षेपकत्वं लक्षणम्। सत्यंतेन दीपकव्युदासः। न चाक्षेपलभ्यसाम्ये व्यतिरेकभेदेऽतिव्याप्तिः। तत्रोपमेयाधिक्यकृत एव चमत्कारः न तु साम्यप्रतीतिकृत इति विशेषात्। उपमेयानाधिक्येन विशेषणान्न दोष इत्यन्ये। औपम्यं चात्र गम्यम्। तत्प्रयोजकसमानधर्मोपादानात्। वाचकाभावाच्च। धर्मवाचकपदैस्तत्तद्रूपेण धर्मभानेऽपि सादृश्यत्वरूपेणाभानात्। **पांड्विति।** क्षामं कृशं सरसं

---

१ ज. नृपते त्वया सिन्नयशस्तेनापि। २ प्र. सरस हृदयं।

आवेदयति नितान्तं क्षेत्रियरोगं सखि हृदन्तः ॥६९॥
कुमुदकमलनीलनीरजालिर्ललितविलासजुषोर्दृशोः पुरः का।
अमृतममृतरश्मिरम्बुजन्म प्रतिहतमेकपदे तवाननस्य ॥ ७० ॥

**उपमानाद्यदन्यस्य व्यतिरेकः स एव सः।**

**अन्यस्योपमेयस्य व्यतिरेक आधिक्यम्।**

अत्र प्रकृतानां विरहिणीवदनादीनामेव धर्मत्वेनावेदनाख्यो धर्म उपात्तः। न तूपमानरोगधर्मतया। अप्राकरणिकानामेव यथा—**कुमुदेति।**

अत्र कामिन्या वर्णनीयत्वादप्राकरणिकानां कुमुदादीनामेव धर्मतया पूर्वार्धे कापदव्यङ्ग्योऽधिक्षेप उत्तरार्धे प्रतिहतत्वं चोपात्तम्। **उपमानादिति।**

---

सानुरागमन्त्ररससहितं च, अत एव अलसं बाह्यक्रियायामक्षमम्। नितान्तमित्यातिशयार्थकं सर्वान्वयि। क्षेत्रियो देहान्तरे चिकित्स्यो देहपर्यन्तस्थायीति फलति। (आर्या छन्दः।) **प्रकृतानामिति।** विरहानुभावत्वेनेत्यर्थः। **वदनादीनाम्।** पांडुत्वादिविशिष्टानाम्। **न तूपमानरोगेति।** उपमानरोगजपांडुतादीत्यर्थः। 'अत्रावेदनक्रियया विरहरोगयोरौपम्यप्रतीतिः। वर्ण्यनायिकासंबंधित्वेन विरहरोगयोः प्राकरणिकत्वम्। अचिकित्स्यत्वरूपं क्षेत्रियत्वं साधारणो धर्मः' इत्यन्ये। अत्र क्रियारूपधर्मैक्यम्। **कुमुदेति।** (कान्तां प्रति कस्यचिदुक्तिः।) प्रसादे कुमुदसाम्यम्। माने (रक्त) कमलसाम्यम्। प्रकृतदशायां नीलनीरजसाम्यम्। ललितो मनोहरः। विलासः कटाक्षः। प्रतिहतं निर्जितम्। एकपदे युगपत्। आननस्येत्यस्य 'अग्रे' इति शेषः। (पुष्पिताग्रा छन्दः।) अधिक्षिप्तत्वेन प्रतिहतत्वेन च तेषां परस्परं साम्यप्रतीतिः। अत्र साम्यप्रतीतावपि तावन्मात्रकृतो न चमत्कारः। किं त्वेकधर्मान्वयकृतोऽपि। अतो गम्योपमया न निर्वाहः। 'जगाल मानो हृदयादमुष्या विलोचनाभ्यामिव वारिधाराः' इत्यत्र न तुल्ययोगिता। सादृश्यप्रतीत्यैव चमत्कारात्। 'चंद्र इव सुंदरं मुखम्' इत्यत्र च न दीपकम्। एवं 'प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया' इत्यत्रापीयमेव। प्रदीयते पराभूतिरिति शब्दस्य श्लेषमूलकाभेदाध्यवसायेनाभिन्नीकृततदर्थस्य वा धर्मस्यैक्यात्। तादृशधर्मेण तयोः साम्यप्रतीतौ हिताहितविषयतुल्यकर्तृत्वरूपं व्यंग्यं वाच्यराजोत्कर्षकतया गुणीभूतं प्रतीयते इत्यन्यत्। नैतावताऽस्य तुल्ययोगितांतरत्वं वक्तुं युक्तम्। 'लोकपालो यमः पाशी श्रीदः शक्रो भवानपि' इत्यत्र तु

क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते नित्यम्[1]।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु ॥७१॥

इत्यादावुपमानस्योपमेयादाधिक्यमिति यत् केनचिदुक्तम्, तदयुक्तम्। अत्र यौवनगताऽस्थैर्याधिक्यं हि विवक्षितम्।

**हेत्वोरुक्तावनुक्तीनां त्रये साम्ये निवेदिते ॥९९॥**
**शब्दार्थाभ्यामथाक्षिप्ते श्लिष्टे[2] तद्वत्रिरष्ट तत्[3]।**

---

अन्यस्योपमेयस्य। व्यतिरेको विशेषेणातिरेक आधिक्यम्। स एव। व्यतिरेक एव। कश्चित्तु—" यत्रोपमेयादुपमानस्य उपमानादुपमेयस्य वा आधिक्यं स व्यतिरेक इति लक्षणम्। कथमन्यथा—**क्षीण** इत्यादिसंग्रहः। अत्र ह्युपमानभूतस्य शशिन उत्कर्षः। क्षैण्येऽपि पुनर्वृद्धेः " इत्याह। तन्न युक्तम्। अस्थैर्ये हि तस्योपमानता। तदाधिक्यं चोपमेये यौवन एवात्र विवक्षितम्। तस्मादुपमानस्योत्कर्षे व्यतिरेक इति रिक्तं वचः। एनं विभजते—**हेत्वोरिति**।

---

उक्तं दीपकमेवेति दिक्। इति **तुल्ययोगिता**। **आधिक्यम्**। गुणविशेषकृत उत्कर्षः। **स एवेति**। योगेनैव लक्षणलाभात् स व्यतिरेकनामालंकार इत्यर्थः। उपमानादित्युक्तेः 'कुमुदादतिरिच्यते मुखम्' इत्यादौ नायमलंकारः। ( **क्षीण इति**। विरम। 'अभिमानात्' इति शेषः। अभिमानं त्यजेत्यर्थः। प्रसीद। प्रसन्ना भव। अनिवर्ति। न प्रत्यावर्तते। यातम्। गतम्। आर्या छन्दः। ) **पुनर्वृद्धेरिति**। यौवनं तु न तथेति उपमेयस्य न्यूनतेत्यर्थः। **अस्थैर्ये हीति**। अयं भावः। न ह्यत्र चंद्रयौवनयोः सादृश्यम्। किं तु तत्क्षययोः। तत्र चंद्रक्षयस्य वृद्धिबाध्यतया न्यूनत्वम्। यौवनक्षयस्य त्वबाध्यतयाधिक्यम्। मानप्रसादनानुगुणतया प्रकृतवाक्यार्थानुगुणत्वात् इति। अस्थैर्यं क्षयः। एवं ह्यत्र वाक्यार्थः। चंद्रो हि पुनःपुनरागमनेन लोके सुलभोऽतो न तादृशमाहात्म्यशाली। इदं पुनर्यौवनमपुनरागमेनातिदुर्लभमिति मानादिभिरंतरायैर्विदग्धया भवत्या मुधा गमयितुं न सांप्रतमिति। अन्यथा 'किमिति अस्य कदर्यस्य यौवनस्य कृते मया मानाद्विरंस्यते यातु नाम यौवनम्' इति प्रतिकूलेनार्थेन प्रकृतार्थस्यापुष्टतापत्तेः। प्रियहितकारिण्या दूत्या हीदं वचनम्। एतेन 'रक्तस्त्वं नवपल्लवैरहमपि श्लाघ्यैः प्रियाया गुणैस्त्वामायांति शिलीमुखाः

---

[1] च. झ. सत्यम्, ग्र. नितराम्  [2] ज. श्लेषे।  [3] प्र. सः।

**व्यतिरेकस्य हेतुः उपमेयगतमुत्कर्षनिमित्तम्, उपमानगतमपकर्षकारणम्, तयोर्द्वयोरुक्तिः, एकतरस्य द्वयोर्वा अनुक्तिरित्यनुक्तित्रयम्, एतद्भेदचतुष्टयमुपमानोपमेयभावे शब्देन प्रतिपादिते; आर्थेन च क्रमेणोक्ताश्चत्वार एव भेदाः; आक्षिप्ते चौपम्ये तावन्त एव; एवं द्वादश। एते श्लेषेऽपि भवन्तीति चतुर्विंशतिभेदाः।**

**क्रमेणोदाहरणम्—**

व्यतिरेकस्य द्वौ हेतू। उपमेयगतमुत्कर्षनिमित्तमुपमानगतमपकर्षनिमित्तं च; तयोर्द्वयोरप्युपादानमित्येकः प्रकारः। अनुपादाने तु त्रयो भेदाः। प्रथमस्यैव द्वितीयस्यैव उभयोरपि वा हेत्वोरनुपादानात्। तदेवं चत्वारो भेदाः। ते च प्रत्येकं त्रिधा। साधर्म्यस्य क्वचिदिवादिना शब्दशक्तेः प्रतिपादनात्। क्वचित्तुल्यादिशब्देनार्थशक्त्या। क्वचिदुभयाभावेऽप्याक्षेपेणेति द्वादशभेदाः। ते च प्रत्येकमश्लिष्टे श्लिष्टे च शब्दे इति चतुर्विंशतिभेदः स इत्यर्थः। तत्राक्षिप्तभेदेषु हेत्वोरुक्तौ शाब्दे साम्ये यथा—

स्मरधनुर्मुक्ताः सखे मामपि। कांतापादतलाहतिस्तव मुदे तद्वन्ममाप्यावयोः सर्वं तुल्यमशोक केवलमहं धात्रा सशोकः कृतः॥' इत्यत्रोपमेयन्यूनतापर्यवसायी व्यतिरेक इत्यपास्तम्। सशोकत्वेन तद्रम्यचेतनत्वसहृदयत्वादिभिर्गुणाधिक्यस्यैव सत्त्वात्। न च न्यूनत्वपदेनापकर्षो विवक्षितः। स च शोकस्य स्वरूपेणापकृष्टत्वादस्त्येव। वाच्यार्थबोधकालिकोत्कर्षापकर्षयोरेव तदलंकाररूपत्वादिति वाच्यम्। प्रकृतवाक्यार्थानुगुणधर्मवत्त्वस्यैवात्राधिक्यपदार्थत्वात्। 'परमचेतनत्वमेव सम्यक् न पुनः प्रियावियोगादिजन्यशोकास्पदं चैतन्यादि' इति पर्यवसानेन तस्य प्रकृतवाक्यार्थभूतविरहानुगुणत्वात्। अत एव प्रियावियोगाद्यपि तुल्यमित्यर्थकमावयोः सर्वं तुल्यमिति वाक्यं चरितार्थम्। एतेनोपमालंकारदूरीकरणमेवात्र चमत्कारि। रसाद्यनुकूलतया कुतश्चिदंगात् भूषणापसरणमिव रसानुसारेण क्वचिदलंकारवियोगोऽपि शोभावह इति ध्वनिकृदुक्तमपास्तम्। एवं 'हनूमदाद्यैर्यशसा मया पुनर्द्विषां हसैर्दूत्यपथः सितीकृतः' (नैषधकाव्ये नवमसर्गे १२३ पद्यम्) इत्यत्र नलमहीपतेः स्वनिंदया लब्धनिर्वेदातिशयरूपप्रकृतवाक्यार्थे दूत्यगतन्यूनताया एवानुगुणत्वेनाधिक्यरूपत्वात्। एवं 'न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः। तथापि जितमेवा-

१ छ. ज. क्तौ च।

असिमात्रसहायस्य प्रभूतारिपराभवे ।
अन्यतुच्छजनस्येव न स्मयोऽस्य महाधृतेः ॥७२॥

अत्रैव तुच्छेति महाधृतेरित्यनयोः पर्यायेण युगपद्वाऽनुपादानेऽन्यत् भेदत्रयम् । एवमन्येष्वपि द्रष्टव्यम् । अत्र इवशब्दस्य सद्भावाच्छाब्दमौपम्यम् ।

असिमात्रसहायोऽपि प्रभूतारिपराभवे ।
नैवान्यतुच्छजनवत्सगर्वोऽयं महाधृतिः ॥७३॥

---

**असीति ।**

अत्रोपमाने तुच्छत्वमुपमेये महाधृतित्वं च हेतू । इवशब्दसत्त्वाच्च शाब्दमौपम्यम् । अत्रैव तुच्छत्वमात्रस्य महाधृतित्वमात्रस्य वा द्वयोरपि वा क्रमेणानुपादाने हेत्वनुपादानभेदत्रयेऽपि शाब्दौपम्यभेदत्रयं द्रष्टव्यम् । हेतुद्वयोपादान एवार्थसाम्ये यथा—**असिमात्रसहायोऽपीति ।**

---

सीदमुना भुवनत्रयम् ॥' इत्यादावपि कठोरतीक्ष्णास्त्ररहितस्य भुवनत्रयजये उत्कर्षातिशयप्राप्त्याऽभावरूपविशेषणस्याप्याधिक्यमात्रसंपादकत्वान्न दोष इत्यलम् । **असीति ।** ( असिरेव सहायो यस्य । प्रभूताः येऽरयः तेषां पराभवे सति । स्मयः । गर्वः । ) मात्रेण सहायांतरव्यवच्छेदः। स्मयाभावोऽत्रोत्कर्षपर्यवसायितयाधिक्यरूपः । अत्र प्रतीयमानमपि सादृश्यं गुणांतरकृतस्वनिषेधोत्थापितेनोत्कर्षेण तिरस्कृतमिति तत्तिरस्कारकतयाऽस्य चमत्कारातिशयजनकत्वम् । तिरस्कार्यतयौपम्यगर्भत्वव्यवहारोऽत्रेति बोध्यम् । आधिक्यवर्णनाभावे सादृश्यं पर्यवस्यतीत्येतावता तद्गर्भत्वव्यवहारात् । एतेनैकगुणपुरस्कारेण सादृश्यनिषेधे गुणांतरेण सादृश्यप्रत्ययस्य दुर्वारत्वादुपमागर्भत्वमस्येत्यपास्तम् । किं चान्यधर्मेण प्रसिद्धसादृश्यस्यैवेदृशाधिक्यप्रतिपादनद्वाराऽभावस्यापकर्षस्य वा प्रतिपादनम् । स चाविशेषात्सर्वधर्मप्रयुक्त एवेति तदप्ररोहात् । कथं 'तुलयामः कलयाऽपि पंकजम्' इत्यादौ सर्वथैव सादृश्यनिषेधाच्च। 'देवदत्तेन सदृशो यज्ञदत्तः किं तु धनमस्याधिकम्' इत्यादौ उत्कटविद्यादित्वेन प्रसिद्धदेवदत्तेन विद्यादिकृतसादृश्यं प्रतीयमानमप्यपकृष्टमिति दिक् । **क्रमेणेति ।** 'नूनमन्यजन-

---

१ प्र. योऽयं । २ प्र. छ. ज. धृतोंनिधिः ।

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् ।

इयं सुनयना दासीकृततामरसश्रिया ।
आननेनाकलङ्केन जयतीन्दुं कलङ्किनम् ॥७४॥

अत्रेवादि–तुल्यादि–पदविरहे आक्षिप्तैवोपमा ।

जितेन्द्रियतया सम्यग्विद्यावृद्धनिषेविणः ।
अतिगाढगुणस्यास्य नाब्जवद्भङ्गुरा गुणाः ॥७५॥

अत्रेवार्थे वतिः । गुणशब्दः श्लिष्टः । शाब्दमौपम्यम् ।

अखण्डमण्डलः श्रीमान्पश्यैष पृथिवीपतिः ।
न निशाकरवज्जातु कलावैकल्यमागतः ॥७६॥

अत्र तुल्यार्थे वतिः । कलाशब्दः श्लिष्टः ।

---

अत्र तुल्यार्थे वतिरित्यार्थमौपम्यम् । अत्र पूर्ववदनुपादानभेदत्रयं द्रष्टव्यम्। हेत्वोरुक्तावेवाक्षिप्ते साम्ये यथा—**इयमिति** ।

अत्राकलङ्कित्वकलङ्कित्वे हेतू समुपात्तौ । इवादीनां तुल्यादीनां वाऽभावादाक्षिप्तमौपम्यम् । अत्रैव हेत्वनुपादाने भेदत्रयं पूर्ववत् द्रष्टव्यम् । न चाक्षिप्तभेद उपमायां शङ्कनीयः । जयत्यादिशब्दस्यावश्यकतया व्यतिरेकेण विषयापहारात् । अथ श्लिष्टभेदेषु हेत्वोरुक्तौ शाब्दमौपम्यं यथा—**जितेन्द्रियेति** ।

अत्र श्लिष्टो गुणशब्दः । तदर्थस्यातिगाढत्वभङ्गुरत्वे च हेतू समुपात्ते । इवार्थे वतिरिति शाब्दमौपम्यम् । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । तत्रैवार्थे साम्ये यथा—**अखण्डेति** ।

अत्र कलाशब्दः श्लिष्टः । कलावैकल्यतदभावौ हेतू शब्दोपात्तौ । तुल्या-

---

स्येव ' इति 'न स्मयोऽस्य महीपतेः' इति च पाठे इत्यर्थः । **आक्षिप्ते इति** । व्यंग्ये इत्यर्थः । (इयमिति ।) दासीकृता पद्मश्रीर्येन तेनाकलंकेनाननेनेत्यन्वयः। **अत्रैवेति** । ' आननेन मनोज्ञेन ' इति जयत्यमृतदीधितिम् ' इति च पाठे इत्यर्थः । **जितेति** । विद्यावृद्धाः पंडिताः । विद्या च वृद्धाश्चेति वा । अतिगाढो विरोधिसहस्रैरप्यनुच्छेद्यः गुणो धैर्यादिर्यस्य । (भङ्गुराः नश्वराः ।) गुणाः पंडितत्वादयस्तंतवश्च । **पूर्ववदिति** । 'मत्कर्मनिरतस्यास्य' इति ' न तामरसवद्गुणाः ' इति च पाठे इत्यर्थः । **अखंडेति** । मंडलं राजचक्रं बिंबं च, श्रीः संपत्तिः शोभा च, कला कौशलं चंद्रषोडशांशश्च। जातु कदापि। **कलावैकल्येति**।

---

१ प्र. निन्द° ।

मालाप्रतिवस्तूपमावत् मालाव्यतिरेकोऽपि संभवति, तस्यापि भेदा एवमूह्याः, दिङ्मात्रं चोदाह्रियते, यथा—

हरवन्न विषमदृष्टिर्हरिवन्न विभो विधूतविततवृषः ।
रविवन्न चातिदुःसहकरतापितभूः कदाचिदसि ॥ ७७ ॥

अत्र तुल्यार्थे वतिः । विषमादयश्च शब्दाः श्लिष्टाः ।

नित्योदितप्रतापेन त्रियामामीलितप्रभः ।
भास्वताऽनेन भूपेन भास्वानेष विनिर्जितः ॥ ७८ ॥

अत्र ह्याक्षिप्तैवोपमा । भास्वतेति श्लिष्टः । यथा वा—

र्थे वतिरित्यार्थमौपम्यम् । अत्रानुपादानत्रयं चिन्त्यम् । अयमेव मालारूपो यथा—**हरवदिति ।**

पूर्ववत् । तत्रैवाक्षिप्ते साम्ये यथा—**नित्योदितेति ।**

अत्र भास्वतेति प्रतापेति च श्लिष्टं पूर्वार्धोपात्तं हेतुद्वयम् । इवादेस्तुल्यादिशब्दानां चाभावादाक्षिप्तैवोपमा । अत्रैव पूर्ववदनुपादाने भेदत्रयं द्रष्टव्यम् । निर्जितजयत्यादिशब्दाभावेऽपि श्लिष्टविशेषणेनौपम्याक्षेपादप्ययं भेदः संभवति । यथा—

अखंडमंडलत्वकलावैकल्ये हेतू इत्यन्ये । **चिंत्यमिति ।** कलावैकल्यतदभावयोर्हेतुत्वेन तदनुपादाने श्लेषः किमाश्रयः स्यात् । हेतुभूतधर्मवाचकस्य तदाश्रयवाचकस्य वा श्लिष्टत्वे श्लिष्टभेद इति भाव. । 'बहुलारिगतोऽप्येष श्रीमानुद्धतविक्रमः । न निशाकरवज्जातु दृश्यतां वसुधाधिपः ॥' इति पाठेन बहुलशब्दे श्लेषसत्त्वात् अखंडमंडलत्वकलावैकल्ययोर्हेत्वोरनुपादानेऽपि संभवत्येवानुपादानत्रयम् । बहुलः कृष्णपक्षः विपुलश्चेत्यन्ये । **हरवदिति ।** वैषम्यं त्रित्वं पारुष्यं च । विधूतः कंपितः । वृषो वृषासुरः बलीवर्दश्च धर्मश्च । सत्यभामापरिणयने कृष्णेन सप्तवृषास्कंदनात् । करः किरणः राजभागश्च । तापिता उद्वेजिता दाहं प्रापिता च । भूर्धरणिस्तत्स्थलोकश्च । ( आर्या छंदः । ) अत्र विषमदृष्टित्वमपकर्षहेतुरुपात्तः । समदृष्टित्वमुत्कर्षहेतुर्नोक्तः । बहूपमानापेक्षया आधिक्यवर्णनान्मालाऽत्रेति बोध्यम् । **नित्येति ।** प्रतापः पराक्रमः प्रकृष्टतापश्च । भास्वता कांतिमता रविणा च । त्रियामा रात्रिः । **आक्षिप्तैवेति !** विनिर्जितपदाक्षिप्तैवेत्यर्थः । **द्रष्टव्यमिति ।** 'समरा सक्तमनसा' इति 'पंकजावलिनं-

१ प्र. चापि.

**स्वच्छात्मतागुणसमुल्लसितेन्दुबिम्बं**
**बिम्बप्रभाधरमकृत्रिमहृद्यगन्धम् ।**
**यूनामतीव पिबतां रजनीषु यत्र**
**तृष्णां जहार मधु नाननमङ्गनानाम् ॥ ७९ ॥**

**स्वच्छात्मतेति ।**

दनः ' इति च पाठे इत्यर्थः । अत्रेदं चित्यम् । उपात्तवैधर्म्यांशे श्लेषेणैव व्यतिरेकस्य श्लेषमूलकत्वमुचितम् । न तु यत्र कुत्रापि श्लेषेणेति कृतभेदत्रयं चिंत्यमेव । न च यत्र द्विजसुरालयमातरिश्वादिशब्दवेद्येषूपमानोपमेयेषु स्वशब्दोपात्त एव श्लेषो व्यतिरेकोत्थापकस्तत्रैतदुदाहरणं सूपपादम् । तत्र स्वशब्दवेद्यस्यैव वैधर्म्यस्य संभवादिति । स्वच्छेति । स्वच्छात्मत्वं निर्मलत्वमेव गुणस्तेन समुल्लसितं प्रतिबिंबितमिंदुबिंबं यत्र । मुखेऽपि कपोले चंद्रप्रतिबिंबात् । मधुपक्षेऽप्येवमेव । यद्वा समुल्लसितेंदुबिंबमिति रूपकम् । मुखपक्षे समुल्लसितत्वं पूर्णत्वम् । यद्वा स्वच्छात्मता चिक्कणता सैव उत्कर्षकत्वेन गुणः । बिंबप्रभोऽधरो यत्रेति मुखपक्षे । मधुपक्षे बिंबप्रभां धरति तत् । (बिम्बप्रभायाः धरं धारकम् ।) जीर्णमधुनो रक्तत्वात् । अकृत्रिमो मुखवासनादिकं वेना गंधांतरयोगं विना च हृद्यो गंधो यस्य । अतीव अतिशयेन । यूनां धुतृष्णां पानेच्छां जहार नाननम् । अधरपानेच्छाया अनिवृत्तेरित्यन्वयः । (वन्ततिलका छन्दः । ) अंगनानामाननं मधुसदृशं हृद्यगंधादिमत्त्वादित्येवं श्लिष्टविशेषणैरौपम्याक्षेपेऽपि तृष्णां जहार नाननमित्यतो वैलक्षण्यात् व्यतिरेक इ' बोध्यम् । अत्र सर्वलोकलभ्यत्वपुण्यैकलभ्यत्वरूपौ तृष्णाहरणाहरणरूपोत्कपकर्षहेतू नोक्तौ । उक्तेपूदाहरणेषु अयमस्मादधिक इति व्यतिरेकाकारो य एव । 'इंदोः पद्माच्चाधिकं मे प्रियाया वदनं मतम् । विलासैर्हृद्यगंधैश्च ' यादौ तु वाच्य एव । अयमेवानुभवपर्यवसायीत्युच्यते । ' प्रियाया वदनेनेंकजं सदृशं न हि । विलासैः शोभमानत्वाद्विकासित्वाद्विधूदये ॥' इति पद्ये पालंकारतिरस्कारको व्यतिरेकः । 'निष्कलंक निरातंक चतुःषष्टिकलाधर । पूर्ण महीप त्वं चंद्रोऽसीति मृषा वचः ॥' इत्यत्र रूपकतिरस्कारकोऽयम् । ारनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य । कृपणस्य कृपाणस्य च माकारतो भेदः ॥' इति पद्ये केवलपदस्वारस्येन अनयोः केवलं आकारवत्पयत्वतदभाववत्पदवाच्यत्वाभ्यां आकृतेश्च भेदः, गुणैस्तु साम्यमेव । दृढ-

अत्रेवादीनां तुल्यादीनां च पदानामभावेऽपि श्लिष्टविशेषणैराभिमुख्येनैवोपमा प्रतीयते। एवंजातीयकाः श्लिष्टोक्तियोग्यस्य पदस्य पृथगुपादानेऽन्येऽपि भेदाः संभवन्ति, तेऽपि अनयैव दिशा द्रष्टव्याः।

**निषेधो वक्तुमिष्टस्य यो विशेषाभिधित्सया ॥२०॥**

**वक्ष्यमाणोक्तविषयः स आक्षेपो द्विधा मतः।**

विवक्षितस्य प्राकरणिकत्वादनुपसर्जनीकार्यस्य अशक्यवक्तव्यत्वमतिप्रसिद्धत्वं वा विशेषं वक्तुं निषेधो (निषेध इव) यः स वक्ष्यमाणविषय उक्तविषयश्चेति द्विधा आक्षेपः। क्रमेणोदाहरणम्—

ए एहि किंपि कीएवि कएण णिक्किव भणामि अलमहवा।
अविआरिअकज्जारम्भआरिणी मरउ ण भणिस्सम् ॥ ८० ॥

---

स्पष्टम्। श्लिष्टोक्तियोग्यपदस्य पृथगुपादानेऽप्येवंजातीयका भेदाः संभवन्ति, तेऽनयैव दिशा द्रष्टव्याः। **निषेध इति**।

वक्तुमिष्टस्य प्राकरणिकत्वाद्वचनार्हस्य यो निषेधः स आक्षेपः। निषेधो निषेध इवेत्यर्थः। शब्दगत्या निषेधेऽप्यर्थगत्या विधेरेव प्रतिपत्तेः। तत्प्रयोजनमाह—विशेषाभिधित्सयेति। वक्ष्यमाणविषयेऽशक्यवक्तव्यत्वमुक्तविषयेऽतिप्रसिद्धत्वं चेति विशेषः। विभजते—वक्ष्यमाणेति। तत्र वक्ष्यमाणविषयो यथा—**ए एहीति**।

---

तरेत्यादिविशेषणसाम्यादितरगुणैश्चेति प्रतीतेर्गम्योपमैवालंकारो न त्वयम्। आधिक्यस्याचमत्कारित्वात्। कृपणस्योपमेयत्वे तद्गतत्वाभावाच्च। औपम्यतिरस्काराभावाच्चेति दिक्। इति **व्यतिरेकः**। **वक्तुमिष्टस्येति**। अस्य व्याख्या वचनार्हस्येति। अवचनानर्हस्येति वा पाठः। **निषेधः**। अभिधाननिषेधः। अनपेक्षिताभिधाननिषेधस्य 'न पद्मं मुखमेवैतत्' इत्यादेश्च वारणाय षष्ठ्यंततृतीयांते। **निषेध इवेति**। अभिधाननिषेधेऽप्यभिधेयानिषेधात् विशेषप्राप्त्यर्थमेवाभिधानस्यापि निषेधादिति भावः। **अर्थगत्येति**। तस्य प्रकृतत्वादेवाभिधातुं पतितस्य क्रियमाणो निषेधो बाधितः सन्नाभासत्वे पर्यवस्यन् विधेराक्षेपक इति भावः। केचित्तु वक्तुमित्युपलक्षणम्। करिष्यमाणस्यापि निषेध आक्षेपः। 'तां सुंदरीं वर्णयितुं न मे वाणी प्रवर्तते' इत्यत्र करिष्यमाणवाणीप्रवृत्तेर्निषेधो वर्णनीयस्यानिर्वाच्यतां व्यनक्तीत्याहुः। ( **ए एहीति**। ) 'ए एहि किमपि कस्या अपि कृते

ज्योत्स्ना मौक्तिकदाम चन्दनरसः शीतांशुकान्तद्रवः
कर्पूरं कदली मृणालवलयान्यम्भोजिनीपल्लवाः ।
अन्तर्मानसमास्त्वया प्रभवता तस्याः स्फुलिङ्गोत्कर-
व्यापाराय भवन्ति हन्त किमनेनोक्तेन न ब्रूमहे ॥ ८१ ॥

**क्रियायाः प्रतिषेधेऽपि फलव्यक्तिर्विभावना ॥२१॥**

**हेतुरूपक्रियायाः निषेधेऽपि तत्फलप्रकाशनं विभावना । यथा—**

---

अत्र विरहजनितदुर्दशातिशयो वक्ष्यमाणो निषिद्धः । उक्तविषयो यथा—
**ज्योत्स्नेति । क्रियाया इति ।**

वैयाकरणमते क्रियैव हेतुरिति क्रियेत्युक्तम् । वस्तुतस्तु कारणप्रतिषेधे कार्यवचनं विभावना । न च विरोधः । स्वाभाविकत्वस्य कारणान्तरस्य वा विभावनात् । उदाहरणम्—

---

निष्कृप भणामि अलमथ वा । अविचारितकार्यारंभकारिणी म्रियतां न भणिष्यामि ॥' किमपि तत्पीडातिशयरूपम् । ए इति सामर्ष संबोधनम् । अलमथवेति पूर्वाक्षेपे । अविचारितेत्यादि तु त्वत्प्रेम्णः स्थैर्यास्थैर्येऽविचार्यैव प्रवृत्तेत्यर्थकम् । अलमित्यनेनैव निषेधलाभे 'न भणिष्यामि' इति पुनः कथनं खेदातिशयद्योतकम् । ( आर्या जघनविपुला । ) अत्र नायिकासंतापातिशयोऽवश्यं वक्तुमिष्टः, न चासौ विशिष्य वक्तुं शक्य इति व्यंजयितुं निषिद्धः । नायकं प्रति दूत्युक्तिः । एवमग्रेऽपि । **ज्योत्स्नेति** । (ज्योत्स्ना चन्द्रिका । मौक्तिकदाम मुक्ताहारः ।) शीतांशुकांतद्रवः चंद्रकांतमणिजलम् । आः इति खेदे । अंतर्मानसम् । मानसमध्ये । प्रभवता दाहकरणसमर्थेन । प्रवसतेति वा पाठः । त्वया करणभूतेन । अतो दुःसमाधानत्वम् । प्रभवतेति पाठे प्रभोरनभियोज्यत्वम् । ( स्फुलिंगोत्करः अग्निकणसमूहः तस्य व्यापारः दाहोत्पादनम् तदर्थम् । शार्दूलविक्रीडितं छन्दः । ) अत्र वियोगिनीनां ज्योत्स्नादि स्फुलिगायते इत्यत्रातिप्रसिद्धत्वं विशेषं व्यंजयितुं ज्योत्स्नादीन्युक्त्वा तत्कथनं प्रतिषिद्धम् । अत्र व्यंग्येनाशक्यवक्तव्यत्वादिना व्यंजकं वाच्यमेव चारुत्वमावहतीति गुणीभूतव्यंग्यता। यत्तु वामनेन ' उपमेये सति किमुपमानेनेत्येवमुपमानाक्षेप आक्षेपः ' इत्युक्तम् । तत्तु वक्ष्यमाणप्रतीपरूपतया गतार्थम् । **इत्याक्षेपः । कारणेति** । प्रसिद्धकारणेत्यर्थः । सूत्रे क्रियतेऽनेनेति व्युत्पत्त्या क्रियाशब्दः कारणपर इति भावः । एवं च कारणव्यतिरेकसामानाधिकरण्येन प्रतीयमाना कार्योत्पत्तिर्विभावनेत्यर्थः ।

कुसुमितलताभिरहताऽप्यधत्त रुजमलिकुलैरदष्टाऽपि ।
परिवर्तते स्म नलिनीलहरीभिरलोलिताऽप्यघूर्णत सा ॥ ८२ ॥

**कुसुमितेति ।**

---

'न कठोरं न वा तीक्ष्णम्' इत्यादावपि कठोरत्वादिविशिष्टायुधस्य जयहेतोरभावेऽपि कार्यकथनाद्विभावनैव । अतिशयोक्तिस्तु तदंगम् । कारणतावच्छेदकावच्छिन्नकारणव्यतिरेकस्य विवक्षितत्वात् । ननु कारणाभावे कार्योत्पत्तौ स्फुरितस्य विरोधस्य प्रसिद्धातिरिक्तेन कारणेन परिहाराद्विरोधाभास एवायमिति चेन्न । समबलयोः परस्परविरोधे तत्स्वीकारात् । इह तु कारणविरहेण कार्यमेव बाध्यत्वेन गम्यते । न तु तेन कारणविरह इति विशेषात् । **कुसुमितेति ।** (नायिकायाः विरहावस्थावर्णनम् ।) लताहननं विरहिण्या रोगहेतुः । सा नलिनीति रूपकम् । भ्रमरदंशः परिवर्तनहेतुः । तरंगसंबंधो घूर्णनहेतुः । नलिनीयुक्ततरंगैरिति वार्थः । ('नलिनी' इति नायिकानाम वा । अहता अताडिता । परिवर्तते परावृत्य वर्तते । अलोलिता अचालिता । गीतिश्छन्दः । ) अत्र विरहरूपहेत्वंतरजनितानां रुजादीनां अन्यत्वेऽप्येकत्वाध्यवसायो विभावनामूलम् । स च प्रकृतेऽनाहार्यः । 'निरुपादानसंभारमभित्तावेव तन्वते । जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥' इत्यत्राहार्यो रूपककृतः । सर्वथा कार्यांशेऽभेदबुद्धिर्विभावनाजीवितम् । सा च क्वचिदतिशयोक्त्या क्वचिद्रूपकेणेत्यन्यत् । 'अप्यलाक्षारसासिक्तं रक्तं तच्चरणद्वयम्' इत्यत्र स्वाभाविकत्वेन परिहारः । अत्र कारणव्यतिरेकः प्रतिबंधकसत्ताया अप्युपलक्षणम् । तेन 'सातपत्रं दहत्याशु प्रतापतपनस्तव' इत्यत्राप्येषा । अत्रापि स्वभावमादाय विरोधपरिहारः । प्रतिबंधकाभावस्यापि कारणत्ववादिनां तु यथाश्रुतमेव सम्यक् । परं तु कारणव्यतिरेकप्रतीतिरार्थीति बोध्यम् । 'शंखाद्वीणानिनादोऽयमुदेति महदद्भुतम्' इत्यत्र वीणां विनेति प्रतीतेरार्थी कारणाभावाप्रतीतिरस्त्येव । अत्र शङ्खत्वेन कान्ताकंठस्तंत्रीनिनादत्वेन तद्गीतं चाध्यवसितम् । 'शीतांशुकिरणास्तन्वीं हन्त संतापयन्ति ताम्' इत्यत्रापि दाहकारणतावच्छेदकधर्मावच्छिन्नाभावप्रतीतिरार्थ्यस्त्येव । विरहकालिकदाहकारणतावच्छेदकत्वं शीतांशुत्वेऽपीति विभावनाद्विरोधपरिहारः । वस्तुतः 'शंखाद्वीणानिनादोऽयम्' इत्याद्युदाहरणानि विरोधस्यैव । परस्परबाध्यत्वावगमात् । 'यशः पयोधिरभवत्करकल्पतरोस्तव' इत्यत्रापि विरोधाभास एव । परस्परं विरोधावगतेः । एतेन 'कार्यात्कारण-

**विशेषोक्तिरखण्डेषु कारणेषु फलावचः।**

मिलितेष्वपि कारणेषु कार्यस्याकथनं विशेषोक्तिः। अनुक्तनिमित्ता, उक्तनिमित्ता, अचिंत्यनिमित्ता च। क्रमेणोदाहरणम्—

निद्रानिवृत्तावुदिते द्युरत्ने सखीजने द्वारपदं पराप्ते।
श्लथीकृताश्लेषरसे भुजंगे चचाल नालिङ्गनतोऽङ्गना सा॥८३॥

---

**विशेषोक्तिरिति—**

अखण्डेषु मिलितेषु प्रसिद्धकारणेषूक्तेषु कार्याभाववचनं विशेषेक्तिः। अत्राप्यप्रसिद्धे कार्याभावहेतौ पर्यवसानाद्विरोधाभावः। सा च त्रिधा—अनुक्तनिमित्ता उक्तनिमित्ता अचिन्त्यनिमित्ता च। तत्राद्या यथा—**निद्रेति।**

---

जन्माऽपि विभावना' इत्यपास्तम्। कारणान्तरं विभावयतीत्यन्वर्थाभावेन तस्य विभावनात्वाभावात्। एवं 'निमीलितादक्षियुगाच्च निद्रया हृदोऽपि बाह्येन्द्रियमौनमुद्रितात्। अदर्शि संगोप्य कदाऽप्यवीक्षितो रहस्यमस्याः स महन्महीपतिः॥' इत्यत्रापि एषा। अक्षियुगात् हृदोऽपि संगोप्य अत एव महत् रहस्यं यथा स्यात्तथा स नृपतिर्निद्रयाऽदर्शि। निमीलितत्वेनाक्षिसन्निकर्षराहित्येन गोपनम्। बाह्येंद्रियसहकृतान्मनसश्च तद्बाह्येंद्रियव्यापाररहितात्ततोऽगोपने पर्यवस्यति। 'सविशेषणे हि' इति न्यायात्। कालांतरीणदर्शनजनितस्मरणसहकृतमनसोपनीतभानं स्यादत आह। कदाऽप्यवीक्षित इति। एवं च योगजधर्मवददृष्टविशेषाद्भिनैवोपनयंनलत्वेन भानमभिमतम्। 'अदृष्टमप्यर्थमदृष्टवैभवात्करोति सुप्तिर्जनदर्शनातिथिम्' इत्युक्तेः। अत्र दृशधातोर्ज्ञानसामान्ये लक्षणया तत्र दर्शनाभेदलाभात् कारणाभावे कार्यलाभेन विभावना। कुसुमितेत्युदाहरणेऽनुक्तनिमित्ता एषा। उक्तनिमित्ताऽप्येषा। यथा 'यदवधि विलासभवनं यौवनमुदियाय चंद्रवदनायाः। दहनं विनैव तदवधि यूनां हृदयानि दह्यन्ते॥' अत्रोपात्ते यौवने दाहहेतुत्वं पर्यवस्यतीति दिक्। **इति विभावना। विशेषोक्तिरिति।** विशेषं कंचित्प्रतिपादयितुमुक्तिरित्यर्थः। **निद्रेति।** द्युरत्नं सूर्यः। (पराप्ते प्राप्ते सति। भुजंगे उपपतौ। श्लथीकृतः शिथिलीकृतः आश्लेषरसः आलिङ्गनरसो येन तादृशे सति। उपजातिश्छन्दः।) कारणसत्वे कुतः कार्यानुत्पत्तिरित्येवमत्र विरोधः। कार्यानुत्पत्तेः कारणसमवधानबाध्यत्वात्। अत्र निमित्तं व्यंग्य-

**कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने ।**
**नमोऽस्त्ववार्यवीर्याय तस्मै मकरकेतवे ॥ ८४ ॥**
**स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।**
**हरताऽपि तनुं यस्य शंभुना न हृतं बलम् ॥ ८५ ॥**

अत्रानुरागातिशयो निमित्तं चलनाभावे । स च विशिष्य वक्तुं शक्यत्वेऽपि नोक्त इत्यनुक्तनिमित्तेयम् । उक्तनिमित्ता यथा—**कर्पूर इति ।**

अत्र 'कर्पूरो दाहमात्रे उपमानं न तु शक्तिमत्त्वेऽपि' इति भास्करः । **शक्तिमत्त्वे** इति परमार्थः । ईषद्दग्धस्य तस्य सौरभाद्यतिशयात् ।

'भ्रूम्यां प्रियाया भवता मनोभूचापेन चापे घनमारभावः ।
निजां यदप्लोषदशामपेक्ष्य संप्रत्यनेनाधिकवीर्यताऽऽर्जि ॥'

इत्यादि नैषधदर्शनात् ।

अत्रावार्यवीर्यत्वं शक्तिमत्त्वे कार्याभावरूपे हेतुरुक्तः । अचिन्त्यन्निमित्ता यथा—**स एक इति ।**

---

मपि न चार्विति गुणीभूतव्यंग्यता । **कर्पूर इवेति ।** ( बालरामायणे तृतीयाङ्के पद्यमेतत् । अवार्यं अकुण्ठितं वीर्यं यस्य तस्मै । मकरकेतवे मदनाय ।) अत्र शरीरदाहः शक्तिध्वंसे कारणम् । सत्यपि तदनुत्पत्तिकथनम् । (**भ्रूम्यामिति ।** नैषधीयकाव्ये सप्तमे सर्गे २९ पद्यम् । 'मनोभूचापेन मदनबाणेन प्रियायाः दमयन्त्याः भ्रूम्यां भ्रूयुगुलेन भवता भ्रूत्वं गच्छता सता घनो दृढो सारो मज्जा यस्य तद्भावः अतिदृढत्वं च आपे प्रापे । यदैव च भ्रूत्वं तदैव दृढत्वमिति चकारार्थः । पुष्पत्वदशायां निःसारस्यापि धनुषो भैमीभ्रूत्वदशायांससारत्वं जातमित्यर्थः । कथं ससारत्वमित्यत आह । यद्यस्मात् निजां स्वीयां अप्लोषदशां अदाहावस्थां अपेक्ष्य संप्रति दग्धस्य भैमीभ्रूभवनसमयेऽनेन धनुषा अधिकवीर्यता अतिशायितपराक्रमत्वं आर्जि अर्जितम् । अदग्धपुष्परूपचापापेक्षया दग्धस्य श्यामीभवत्केसरशेषस्य भैमीभ्रूभवतस्तस्यैव चापस्य जगद्वशीकरणे अधिकसामर्थ्यदर्शनादेवमनुमीयते इति भावः । घनत्वं सारत्वं दृढत्वं श्रेष्ठत्वं च प्रापे इति वा । अथ च घनसारभावः कर्पूरत्वं च । यतः कर्पूरोऽपि निजांगदाहात् स्वीयपक्वावस्थामपेक्ष्यादाहावस्थायामधिकवीर्यतामतिशयितं सौगन्ध्यं शीतलत्वं चार्जयति ' इति नैषधीयप्रकाशे स्पष्टम् । ) **स इति ।**

---

१ च. छ. झ. बलं हृतम् ।

**यथासंख्यं क्रमेणैव क्रमिकाणां समन्वयः ॥ २२ ॥**

**यथा—**

**एकस्त्रिधा वससि चेतसि चित्रमत्र**
**देव द्विषां च विदुषां च मृगीदृशां च ।**
**तापं च संमदरसं च रतिं च पुष्णन्**
**शौर्योष्मणा च विनयेन च लीलया च ॥ ८६ ॥**

अत्र तनुहरणेऽपि बलाहरणस्य हेतुर्विशिष्य वक्तुं न शक्यत इत्यचिन्त्यनिमित्तेयम् । **यथासंख्यमिति ।**

यथा—**एक इति ।**

---

एकोऽसहायः । कुसुमेत्यनेनायुधस्य निःसारता । **न शक्यत इति ।** शास्त्रैकगम्यत्वादिति भावः । यद्यप्यनुक्तत्वाविशेषादेषाऽप्यनुक्तनिमित्तैव । तथापि प्रकरणादिना ज्ञातस्य निमित्तस्यावचनेऽनुक्तनिमित्ता । अज्ञातस्यावचने एषेति भेदः । यत्तु " एकगुणहानिकल्पनया साम्यदार्ढ्यं विशेषोक्तिः । यथा 'द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्' " इति । तन्न। अत्र द्यूते राज्यस्य तादात्म्येनारोपेण रूपकसत्त्वात् । तत्र सिंहासनरहिते द्यूते सिंहासनसहितराज्यतादात्म्यं कथं सिध्येदिति आरोपोन्मूलकयुक्तिनिरासायारोप्यमाणराज्येऽपि सिंहासनराहित्यं कल्प्यते इति दृढारोपरूपकमिदम् । एवं गुणाधिक्यकल्पनायामप्येतदेव । यथा 'धर्मो वपुष्मान् भुवि कार्तवीर्यः' इत्यादाविति दिक् । **इति विशेषोक्तिः । क्रमेण ।** उपदेशक्रमेण । पूर्वस्य पूर्वेण मध्यस्य मध्येनांत्यस्यांत्येनेत्येवमित्यर्थः । अन्वयिसमसंख्यपदार्थज्ञानस्य यथासंख्यान्वयबोध्यत्वं कार्यतावच्छेदकम् । यद्यपि कविप्रतिभानिर्मितत्वस्यालंकारताजीवातोर्लेशतोऽप्यभावादस्य नालंकारत्वम् । तथापि एकत्र पद्ये बहूनां क्रमान्वये वैचित्र्यादलंकारत्वेनोक्तः । ( **एक इति ।** राजानं प्रत्युक्तिः । हे देव राजन् एकः त्वम् द्विषाम् शत्रूणाम्, विदुषाम् पण्डितानाम्, मृगीदृशाम् स्त्रीणां च चेतसि त्रिधा प्रकारत्रयेण वससि । अत्र एतद्विषये चित्रम् आश्चर्यम् । शौर्योष्मणा प्रतापाग्निना, विनयेन नम्रतया, लीलया विलासेन च क्रमेण तापम् सन्तापम्, सम्मदरसम् आनन्दरसम्, रतिं प्रीतिं च पुष्णन् सन् इत्यर्थः । वसन्ततिलका छन्दः । ) **इति यथासंख्यम् ।**

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते ।**
**यत्र सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा ॥ २३ ॥**

साधर्म्येण वैधर्म्येण वा सामान्यं विशेषेण यत् समर्थ्यते, विशेषो वा सामान्येन, सोऽर्थान्तरन्यासः । क्रमेणोदाहरणम्—

निजदोषावृतमनसामतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतम् ॥ ८७ ॥

सुसितवसनालंकारायां कदाचन कौमुदी
महसि सुदृशि स्वैरं यान्त्यां गतोऽस्तमभूद्विधुः ।
तदनु भवतः कीर्तिः केनाप्यगीयत, येन सा
प्रियगृहमगान्मुक्ताशंका, क्व नासि शुभप्रदः ॥ ८८ ॥

---

स्पष्टम् । **सामान्यमिति ।**

सामान्यं यद्विशेषेण समर्थ्यते विशेषो वा सामान्येन सोऽर्थान्तरन्यासः । द्वयोरपि प्रत्येकं समर्थनहेतुः साधर्म्यं वैधर्म्यं चेति चतुःप्रकारोऽयमित्यर्थः । तत्र विशेषेण सामान्यसमर्थनं साधर्म्येण यथा—**निजेति** ।

सामान्येन विशेषसमर्थनं साधर्म्येण यथा—'**सुसितवसना**'—इत्यादि ।

---

**सामान्यमिति ।** अनुपपद्यमानतया संभाव्यमानस्यार्थस्योपपादनार्थं यदर्थांतरं न्यस्यते सोऽर्थान्तरन्यासः । दृष्टान्ते तु सामान्यं सामान्येन विशेषो विशेषेण समर्थ्यते इति ततो भेदः । साक्षाद्व्याप्त्यादेरनभिधानादनुमानतो भेदः । कविनिबद्धप्रमात्रन्तरनिष्ठानुमितेरेवानुमानालंकारविषयत्वाच्च । ( **निजदोषेति ।**) सुंदरमेव सुंदरमपि । ( पित्तेन उपहतः व्याप्तः । शशिवत् शुभ्रम् । आर्या छन्दः ।) अत्र निजदोषेत्यादि सामान्यं शंखपीतिम्ना विशेषेण समर्थितम् । यद्यपि दोषेण भ्रमो भवतीत्यर्थे पामरस्याऽपि नानुपपत्तिसंभावना तथाप्याहार्या सा बोध्या । (**सुसितेति** ।) राजानं प्रति कव्युक्तिः । कदाचन एकदा शुभ्रवस्त्रालंकारायां कौमुदीमहासि स्वैरं यान्त्यामस्तं विधुर्गतः । ततो भवत्कीर्तेर्गाने कौमुदीवदेव प्रकाशे जाते सा मुक्ताशंका पतिगृहमगादित्यन्वयः । अतस्त्वं क्व शुभप्रदो नासि। सर्वत्रैव तथेत्यर्थः। मूर्तत्वं धवलतागुणाश्रयत्वम् । (हरिणी छन्दः । ) सुसितेत्यादिनाऽभिहितो विशेषः क्व नासीत्यादिना सामान्येन सम-

---

२ अ. यत्तु ।

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असंजातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ८९ ॥
अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदः पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः॥९०॥

**विरोधः सोऽविरोधेऽपि विरुद्धत्वेन यद्वचः ।**

---

विशेषेण सामान्यसमर्थनं वैधर्म्येण यथा—**गुणानामिति** ।

अत्र धुर्य इत्यादि साधारण्यात्सामान्यम् । गौर्गलिरिति विशेषः । वैधर्म्यं च स्फुटम् । वैधर्म्येण विशेषस्य सामान्येन समर्थनं यथा—**अहो इति ।**

सामान्यविशेषभाव उपपादनीयः । **विरोध इति ।**

---

र्थितः । **गुणानामिति** । गुणरूपदोषादेव धुर्यः श्रेष्ठः धुरि कार्यभारे नियुज्यते । असंजातव्रणः स्कंधो यस्य । य आसंजितं युगं बलात्पातयति स गौर्गलिः । **अहो इति** । ( आपन्नं ) सुहृदं प्रति ( तदवस्थोचितम् ) अप्रियं वदतः ( खेदातिशयात् स्वजीवितं निन्दतः कस्यचित् ) उक्तिः । ते इत्यनेन सामान्यतो मत्पदार्थस्यापि ग्रहणात्सामान्यत्वम् । ( सुहृदः मित्रस्य । वंशस्थं वृत्तम् ।) ते धन्या इति सामान्येनाहमधन्य इति वैधर्म्यद्वारा स्वायुरपराधरूपो विशेषः समर्थ्यते । अत्र हि यत् यत इत्यादेः प्रतिपादकस्याभावे समर्थ्यसमर्थकभाव आर्थः । तत्सत्त्वे शाब्दः । ननु ' उपकारमेव तनुते विपद्गतः सद्गुणो नितराम् । मूर्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः॥'इत्यत्र कोऽलंकार इति चेदयमेव । निदर्शनशब्दस्य समर्थकपरत्वात् । उपमाऽत्रालंकार इति कश्चित् । एतेनोदाहरणालंकारोऽयमतिरिक्त इत्यपास्तम् । कारणेन कार्यस्य कार्येण कारणस्य वा समर्थनं तु काव्यलिंगस्य विषय इति बोध्यम् । समर्थ्यसमर्थकयोः सामान्यविशेषभावसंबंधेऽयं, तदितरसंबंधे काव्यलिंगमित्युपगमात् । ' अनंतरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम् । एको हि दोषो गुणसंनिपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥' इत्यत्र द्वयोरप्यर्थान्तरन्यासयोः संसृष्टयादि बोध्यम् । एतेन ' यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः । यथानंतेति ' इति विकस्वरालंकारोऽयं पृथगित्यपास्तम् । **इत्यर्थांतर-**

---

१ ज. सुहृदां.

**वस्तुवृत्तेनाविरोधेऽपि विरुद्धयोरिव यदभिधानं स विरोधः ।**

**जातिश्चतुर्भिर्जात्याद्यैर्विरुद्धा स्याद्गुणस्त्रिभिः॥२४॥**

**क्रिया द्वाभ्यामथ द्रव्यं द्रव्येणैवेति ते दश ।**

क्रमेणोदाहरणम्—

**अभिनवनलिनीकिसलयमृणालवलयादि दवदहनराशिः ।**

**सुभग कुरङ्गदृशोऽस्या विधिवशतस्त्वद्वियोगपविपाते ॥ ९१ ॥**

वस्तुगत्या विरोधाभावेऽपि यद्द्वयोर्विरुद्धयोरिवाभिधानं स विरोधः । **एनं** विभजते—**जातिरिति** ।

जात्याद्यैरिति जातिगुणक्रियाद्रव्यैः । त्रिभिरिति गुणक्रियाद्रव्यैः । **द्वाभ्या**मिति क्रियाद्रव्याभ्याम् । यद्यपि गुणानामपि जात्या विरोधः संभवत्येव । तथापि जातेर्गुणविरोध एव प्रविष्टत्वाद्गुणस्त्रिभिरित्युक्तम् । एवं क्रिया द्वाभ्यामित्यपि द्रष्टव्यम् । तदयमर्थः—जातिनिरूपितो भेदश्चतुर्धा । गुणनिरूपितस्तु पूर्वभेदभिन्नस्त्रिधा । एवमग्रेऽपि । तत्र जात्या जातेर्विरोधो यथा—**अभिनवेति ।**

अत्र नलिनीत्वकिसलयत्वादिजातीनां दहनत्वजात्या विरोधः । वियोगातिशयेन गौणत्वात्तदाभासता । एवमग्रेऽप्यूह्यम् । जातेर्गुणेन यथा—

---

**न्यासः । विरुद्धयोरिति ।** विरोधप्रतिभाप्रयोजकरूपेण यदभिधानमित्यर्थः । यथाश्रुतशाब्दोपस्थितिमहिम्ना विरोधज्ञानेऽपि शब्दस्यान्यत्र तात्पर्यान्न विरोध इत्ययं विरोधाभास इत्युच्यते । विरोधश्चैकाधिकरणसंबद्धत्वेन प्रसिद्धयोरर्थयोर्भासमानैकाधिकरणासंबद्धत्वम् । एकाधिकरणासंबद्धत्वेन प्रसिद्धयोरेकाधिकरणसंबद्धत्वेन प्रतिपादनं वा । स च बाधबुद्ध्यनभिभूतो दोषस्य विषयः । तदभिभूतोऽलंकारस्येति बोध्यम् । **क्रियेति ।** क्रियाशब्देनाऽत्रधातुवाच्योऽर्थः । **अभिनवेति।** दवदहनो दवाग्निः । (विधिवशत दैववशात् । त्वद्वियोग एव) पविः वज्रम् । (गीतिश्छन्दः ।) **गौणत्वादिति ।** वियोगजन्यसंतापातिशायके लाक्षणिकत्वादित्यर्थः । नन्वेवमत्रारोपमूलं रूपकमेव । न विरोधः । अन्यथा मुखं चंद्र इत्यत्रापि विरोध एव स्यादिति चेन्न अत्र विरोधोत्थापनार्थमभेदस्य विवक्षितत्वेऽपि तस्यान्यार्थमुपादानेनाचमत्कारित्वात् । विरहिण्यवस्थायामत्यद्भुतत्वस्याऽत्र प्रतिपिपादयिषितत्वेन तदनुगुणतयांतर्गर्भितोऽप्यर्थो विरोध एव चमत्कारितया समुल्लसतीति तस्यैवालंकारत्वात् मुखं चंद्र इत्यादौ तु चंद्रनिष्ठाल्हादकत्वादिसकलगुणानां मुखे प्रतिपत्त्य

गिरयोऽप्यनुन्नतियुजो मरुदप्यचलोऽब्धयोऽप्यगम्भीराः ।
विश्वंभराऽप्यतिलघुर्नरनाथ तवान्तिके नियतम् ॥ ९२ ॥
येषां कण्ठपरिग्रहप्रणयितां संप्राप्य धाराधर-
स्तीक्ष्णः सोऽप्यनुरज्यते च कमपि स्नेहं पराप्नोति च ।
तेषां संगरसङ्गसक्तमनसां राज्ञां त्वया भूपते
पांसूनां पटलैः प्रसाधनविधिर्निर्वर्त्यते कौतुकम् ॥ ९३ ॥

---

**गिरय इति ।**

अत्र गिरित्वादिजातीनामनुन्नतत्वादिगुणैर्विरोधः । वर्णनीयातिशयविवक्षया तु परिहारः । विश्वंभरेति तु न जात्युदाहरणम् । जातेः क्रियया यथा—

**येषामिति ।**

अत्र धाराधरत्वजातेरनुरागस्नेहपराप्तिक्रियाभ्यां विरोधः । लौहित्यचैक्कण्यार्थकत्वादविरोधः । एवमग्रेऽप्यविरोध ऊह्यः । तीक्ष्णत्वस्यानुरागेण विरोध इत्यपव्याख्यानम् । अनुदाहरणत्वप्रसङ्गात् । जातेर्द्रव्येण यथा—

---

चंद्राभेद एव चमत्कारी न तु सन्नपि विरोधः । विवक्षितार्थाननुगुणत्वात् इति रूपकमेव न तु विरोधोऽलंकारः । यदि तु विरहिण्यवस्थाया अत्यद्भुतत्वं न विवक्षितमप्यर्थश्च न गर्भीकृतः किं तु पीडाजनकत्वाद्यतिशयमात्रं तदाऽत्ररूपकमेव।यदि वा नगरविशेषस्थिते रत्यद्भुतत्वविवक्षयाऽप्यर्थगर्भीकरणेन च ‘ यत्र नारीणां मुखं चंद्रः ’ इत्युच्यते तदा तत्र विरोध एवेति दिक्। **गिरय इति ।** नञल्पार्थे । तेनाल्पोन्नतियुजः अल्पवेगः अल्पगंभीरा इत्यर्थः । वायौ मंदवेगत्वाद्युक्त्या वर्णनीये तदतिशयप्रतीतेः । अतिलघुत्वम् अपकृष्टगुरुत्वम् । ( आर्या छन्दः । ) **वर्णनीयातिशयेति** । वर्णनीयौन्नत्याद्यतिशयेत्यर्थः । अत्राद्ये शुद्धः द्वितीये श्लेषमूलः । एवमग्रेऽप्यूह्यम् । **येषामिति ।** कंठपरिग्रहप्रणयिताम् आलिंगनप्रेमवत्ताम् । ( धाराधरः खड्गः । ) तीक्ष्णः दारुणः । अनुरज्यते रक्तवर्णः प्रीतिमांश्च ।स्नेहश्चिक्कणता सौहार्दं च । संगरसंगो युद्धप्राप्तिः(तत्र सक्तं मनो येषां तेषाम्)। प्रसाधनमलंकरणम्। ( निर्वर्त्यते क्रियते इति कौतुकम् । शार्दूलविक्रीडितं छन्दः ।) **लौहित्येति ।** रुधिरसंपर्ककृतेत्यर्थः । **अनुदाहरणत्वेति ।** तीक्ष्णत्वस्य जातित्वाभावादिति भावः । ती-

---

१ ज. ध्यचलो ।

**सृजति च जगदिदमवति च संहरति च हेलयैव यो नियतम् ।**
**अवसरवशतः शफरो जनार्दनः सोऽपि चित्रमिदम् ॥ ९४ ॥**
**सततं मुसलासक्ता बहुतरगृहकर्मघटनया नृपते ।**
**द्विजपत्नीनां कठिनाः सति भवति कराः सरोजसुकुमाराः॥९५॥**
**पेशलमपि खलवचनं दहतितरां मानसं सुतत्त्वविदाम् ।**
**परुषमपि सुजनवाक्यं मलयजरसवत्प्रमोदयति ॥ ९६ ॥**

---

**सृजतीति ।**

अत्र शफरत्वजातेर्जनार्दनेन द्रव्येण विरोधः । गुणस्य गुणेन यथा—**सततमिति ।**

कठिनत्वसुकुमारत्वयोर्विरोधः । गुणस्य क्रियया यथा—**पेलवमिति ।**

अत्र पेलवत्वपरुषत्वयोर्गुणयोर्दाहप्रमोदक्रियाभ्यां विरोधः । यथा वा मद्रातुः श्रीहर्षस्य—

सर्वतः पुरत एव दृश्यते पात्रतां न पुनरेति चक्षुषोः ।
हृद्गतोऽपि भुजयोर्न भाजनं कोऽयमालि वनमालिनः क्रमः ॥

अत्र दर्शनगमनक्रिययोर्गमनाभावभुजभाजनत्वाभावाभ्याम् । उक्तत्रयातिरिक्तस्यैव गुणशब्देन विवक्षणात् । 'गिरयः—'इत्यादि तथैवोदाहृतम् । गुणस्य द्रव्येण यथा—

---

क्षणस्यापि क्वचिदनुरागदर्शनाच्चेत्यपि बोध्यम् । ( **सृजतीति ।** हेलयैव लीलयैव । अवसरवशतः कालगतेः । शफरः मत्स्यो जातः इदं चित्रम् । आर्या छन्दः । ) **अत्र शफरत्वेति ।** लीलया सर्वसंभवात् मत्स्यशरीरपरिग्रहस्यागमसिद्धत्वादविरोधः । **द्रव्येणेति ।** आत्मपरत्वाज्जनार्दनपदस्य द्रव्यपरत्वम् । ( **सततमिति ।** मुसलेषु आसक्ताः । बहुतरं यत् गृहकर्म गृहव्यापारः तस्य करणेन संपादनेन कठिनाः द्विजपत्नीनां कराः भवति दातरि सति सरोजवत् सुकुमारा जाताः । गीतिश्छन्दः । ) **विरोध इति ।** भवद्दानवशात् गृहव्यापारनिवृत्त्या तत्परिहारः । **पेशलमिति ।** पेशलम् कोमलम् । सतत्त्वं तत्वमिति च पर्यायः । मलयजरसश्चंदनद्रवः । ( आर्या छन्दः । ) **विरोध इति ।** पेशलपरुषपदयोः सुश्रवत्वदुःश्रवत्वार्थकतया दहतिपदस्य संतापार्थकतया च तत्परिहारः । **सर्वत इति ।** दृश्यते । शास्त्रतो ज्ञायते इत्यर्थः ।

---

१ प्र. पेलव. २ अ, प्र. सतत्त्व.

क्रौञ्चाद्रिरुद्दामदृषदृढोऽसौ यन्मार्गणाऽनर्गलशातपाते ।
अभून्नवाम्भोजदलाऽभिजातः स भार्गवः सत्यमपूर्वसर्गः॥९७॥

परिच्छेदातीतः सकलवचनानामविषयः
पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान् ।
विवेकप्रध्वंसादुपचितमहामोहगहनो
विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥ ९८ ॥

---

**क्रौञ्चेति ।**

अत्राम्भोजदलाभिजातत्वस्य गुणस्य क्रौञ्चाद्रिणा द्रव्येण विरोधः । क्रियायाः क्रियया यथा—**परिच्छेदेति ।**

अत्र जडयति च तापं च कुरुत इति क्रिययोर्विरोधः । क्रियाया द्रव्येण यथा—

**क्रौंचेति।** अतिमहाद्भिः पाषाणैर्दृढोऽपि यस्य(भार्गवस्य) बाणानामनर्गलं अप्रतिबंधं शातवत् वज्रवत्पाते सति नवपद्मपत्रकोमल इत्यर्थः।(भार्गवः परशुरामः। अपूर्वः सर्गः रचना यस्य। यत्कर्तृकः यत्कर्मको वा। उपजातिश्छन्दः।) **विरोध इति।** भार्गवमहिम्नाऽभिजातपदस्य सुखवेध्यत्वपरतया परिहारः। यद्यपि कुमारः क्रौंचदारण इति कोशात्स्कंदे तत्त्वं प्रसिद्धम्। तथाऽपि स्कन्दसाहाय्यार्थं भार्गवोऽपि तत्कृतवानिति पुराणे प्रसिद्धम्। **परिच्छेदेति।** मालतीमाधवे मकरन्दं प्रति माधवस्य स्वावस्थाकथनमेतत्। परिच्छेद इयत्ता तमतीतस्तद्रहित इत्यर्थः। सकलानां सामान्यविशेषशक्तलाक्षणिकव्यांजनिकानां वचनानामविषयः। तैर्निर्वक्तुमशक्य इति भावः। पुनरन्यदा कालान्तरे अस्मिन् जन्मनि अनुभवपथं तद्विषयत्वं यो न प्राप्त इत्यर्थः। विवेकप्रध्वंसादिति। विवेको दोषगुणविभागः। प्रशब्देन समूलोन्मूलनलक्षणः प्रकर्षस्तेन मोहप्रकर्षस्तेन च रागातिशयस्तेन च विप्रलम्भातिशयो व्यंग्यः। तद्धेतुकां उपचितिं वृद्धिं प्राप्तो यो महामोहः सकलविषयाणामज्ञानं विपरीतज्ञानं वा यत्र तादृशश्चासौ गहनश्च दुर्लंघ्य इत्यर्थः। ईदृशः कोऽप्यनिर्वचनीयः विकारः अन्तः अन्तःकरणं जडयति विषयग्राहिवृत्तिविषये स्तब्धं करोतीत्यर्थः। (शिखरिणी छन्दः।) **विरोध इति।**

---

१ अस्य श्लोकस्य व्याख्यानं चतुर्थोल्लासोद्योतस्थमत्र लिखितम्।

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनिः ॥ ९९ ॥
समदमतङ्गजमदजलनिस्यन्दतरङ्गिणीपरिष्वङ्गात् ।
क्षितितिलक त्वयि तटजुषि शंकरचूडापगाऽपि कालिन्दी ॥१००॥

**स्वभावोक्तिस्तु डिम्भादेः स्वक्रियारूपवर्णनम् ॥२५॥**

**स्वयोस्तदेकाश्रययोः । रूपं वर्णः संस्थानं च । उदाहरणम्—**

**अयमिति ।**

अत्र पानक्रियायाः कर्मीभूतेन जलनिधिना विरोधः । यद्यपि जलनिधीनां बहुत्वेन न द्रव्यविरोधोदाहरणत्वमुचितं तथाप्येकलवणाम्बुधिपरतया समर्थनीयम् । द्रव्यस्य द्रव्येण यथा— **समदेति ।**

अत्र गङ्गायमुनयोर्विरोधः । **स्वभावोक्तिरिति ।**

स्वत्वं च स्वमात्राश्रितत्वम् । न तु स्वाश्रितत्वमात्रम् । अतो न साधारणधर्मवर्णनेऽतिव्याप्तिः । रूपशब्देन वर्णः संस्थानं चोच्यते । उदाहरणम्—

---

विरहवैचित्र्येण कालभेदात्तत्परिहारः । **अयमिति ।** ( भल्लटकविकृते भल्लटशतके पद्यम् । अयं जलनिधिः समुद्रः वारां जलानां निलयः स्थानम् । तृष्णया तरलितं आक्रान्तं मनो येषां तैरस्माभिः ।) स्वीयकरचुलुकगर्त्तगतं । कोटरो गर्त्तः । ( ताम्यन्तः ग्लायन्तः तिमयः मत्स्याः मकराश्च यत्र तादृशम् । शिखरिणी छन्दः । ) **विरोध इति ।** अगस्त्यतपःप्रभावातिशयेन परिहारः। **न द्रव्येति।** किं तु जातीत्यर्थः । एतेन 'असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम्' इत्यसंभवाऽलंकारोऽत्रेति परास्तम् । तदुक्तेर्विरोधपरिपोषकत्वात् । **समदेति ।** मत्तगजमदजलप्रवाहनदीसंबंधात् । शिवस्य जूटं जटासमूहस्तत्संबंधिनी आपगा गंगा । कालिंदी यमुना । ( गीतिश्छन्दः । ) **विरोध इति ।** कालिंदीपदस्य श्यामाभामात्रपरत्वात्परिहारः । **इति विरोधः । स्वमात्रेति ।** डिम्भादेरित्यनेनैव संबंधावगतेः स्वशब्दोऽन्ययोगव्यवच्छेदक इति भावः । **रूपशब्देनेति ।** अजहत्स्वार्थलक्षणयेति भावः । अत्र चमत्कृतिहेतुत्वमलंकारसामान्यलक्षणप्राप्तम् । तेन 'पश्य चायं बलीवर्दो घासमत्ति मुखेन

---

१ प्र. कवलित । २ प्र. इदं को ।

पश्चादङ्घ्री प्रसार्य त्रिकनतिविततं द्राघयित्वाऽङ्गमुच्चै-
रासज्याभुग्नकण्ठो मुखमुरसि सटां धूलिधूम्रां विधूय ।
घासग्रासाभिलाषादनवरतचलत्प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितः क्ष्मां खुरेण ॥१०१॥

**व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथा ।**

व्याजरूपा व्याजेन वा स्तुतिः । क्रमेणोदाहरणम्—

हित्वा त्वामुपरोधवन्ध्यमनसां मन्ये न मौलिः परो
लज्जावर्जनमन्तरेण न रमामन्यत्र संदृश्यते ।

---

**पश्चादिति ।**

अत्राऽश्वमात्रगतयोः क्रियासंस्थानयोर्वर्णनम् । **व्याजस्तुतिरिति ।** मुखे निन्दावगतौ यत्स्तुतौ पर्यवसानं स्तुतेर्वा मुखेऽवगमो निन्दायां पर्यवसानं तव्द्याजस्तुतिपदवाच्यमित्यर्थः । कथमुभयोरनेनाभिधानमिति चेत्, आद्यस्य व्याजेन स्तुतिरिति ग्रहणात्, अन्त्यस्य तु व्याजरूपा स्तुतिरिति । तत्राद्या यथा—**हित्वेति ।**

---

तु ' इत्यादेर्निरासः । साधारणस्वभाववर्णनस्य स्फुटत्वान्नालंकारत्वम् । असाधारणस्तु लोकसिद्धोऽपि प्रतिभामात्रवेद्यत्वादलौकिकवद्भातीत्यलंकारः । डिम्भः शिशुः । आदिना युवतिमुग्धकातरतिर्यक्भ्रांतहीनपात्रादिसंग्रहः । एनामेव 'जातिः' इति केचिद्व्यवहरन्ति । **पश्चादिति ।** पश्चादंघ्री पश्चिमपादौ प्रसार्य त्रिकं पृष्ठवंशः तस्य नम्रतया विस्तृतमङ्गं उच्चैरतिशयेन द्राघयित्वा दीर्घं कृत्वा आभुग्नकंठो वक्रग्रीवः उरसि मुखं संयोज्य सटा ग्रीवाकेशाः विधूय कंपयित्वा तृणग्रासवांछया अनवरतं निरंतरं चलन्तौ प्रोथतुण्डावोष्ठाधरौ ओष्ठाग्रे वा यस्य ( क्ष्मां भूमिम् । विलिखति उत्किरति । स्रग्धरा छन्दः । ) **अत्रेति ।** पश्चादित्यादिना संस्थानस्य, घासग्रासेत्यादिना क्रियाया इत्यर्थः । **इति स्वभावोक्तिः । रूढिः ।** पर्यवसानम् । **अन्यथा ।** स्तुतौ निंदायां वा । **मुखे** इत्यनेन पर्यवसानाभावं वदन् बाधितत्वमभिप्रैति । अत एव नास्या ध्वनित्वम् । तत्र हि निर्बाधेन वाच्येन व्यंजनयाऽर्थांतराऽवगतिः।न चैवं प्रकृते।बाधेन लक्षणाप्रसरात् । उपकृतं बहु नामेत्यादिवत् इति बोध्यम् । **हित्वेति ।** अनुरोधहीनमनसां मूर्धन्यस्त्वदपरो न लज्जाशून्यत्वं च लक्ष्मीं विना नान्यत्र । उभ-

यस्त्यागं तनुतेतरां मुखशतैरेत्याश्रितायाः श्रियः
प्राप्य त्यागकृतावमाननमपि त्वय्येव यस्याः स्थितिः ॥१०२॥
हे हेलाजितबोधिसत्त्व वचसां किं विस्तरैस्तोयधे
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धाऽयशो-
भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥ १०३ ॥

**सा सहोक्तिः सहार्थस्य बलादेकं द्विवाचकम्॥१६॥**

एकार्थाऽभिधायकमपि सहार्थबलात् यत् उभयस्यावगमकं सा स-

स्पष्टम् । अन्त्या यथा—**हे इति** ।
अत्रोपकारवैमुख्ये पर्यवसानम् । **सेति** ।
शब्दशक्त्या एकार्थाभिधायकं पदं यत्सहार्थान्वयबलादनेकार्थाभिधायकं सा सहोक्तिः । 'चैत्रमैत्रौ गच्छतः' इत्यादौ तु शब्दशक्त्यैवोभयाभिधानम् ।

---

यत्र हेतुमाह—य इति । मुखशतैः युद्धादिप्रकारशतैः । ( शार्दूलविक्रीडितं छन्दः । ) राज्ञ आश्रितत्यागरूपनिंदाव्याजेन महादातृत्वेऽपि लक्ष्मीवत्त्वाभिधानात्स्तुतिः । **हे इति** । हेलया लीलया जिता बोधिसत्वा बौद्धा येन । अतिकारुणिकानामपि जेतरित्यर्थः । परहिताधाने परहितकरणे । ( शार्दूलविक्रीडितं छन्दः । ) मरुदेशेन एकाकिना निर्जलत्वात् तृषितपांथोपकाराभावजन्याऽयशोभारो गृहीतः । त्वयाऽपि क्षारजलत्वात् तं भारं गृह्णता तस्य साहायकेनोपकारः कृत इति स्तुत्या तृषितपांथाऽनुपकारेण निंदायां पर्यवसानम् । न चात्राऽप्रस्तुतप्रशंसैवास्तु । स्तुतिनिन्दात्मकतया विच्छित्तिविशेषात् । कार्यकारणभावादिसंबन्धाभावाच्च । शुद्धव्यंजनाविषयत्वाभावाच्च । ननु स्तुत्या निन्दायाः कथमलंकारत्वम्, वाच्यानुत्कर्षकत्वात् इति चेन्न । बीभत्सहास्यान्यतररसालंबनत्वान्निंद्यस्य तद्रसानुकूलोत्कर्षकत्वस्य सत्वात् इत्याहुः । अन्यस्तुत्याऽन्यस्तुतेरन्यनिन्दयाऽन्यनिंदाया अन्यनिन्दयाऽन्यस्तुतेर्गम्यत्वेऽप्येषा । स्तुतिपदेन बोधनस्य बोधनात् । निन्दादीनां व्यंङ्ग्यत्वेऽप्यलंकारत्वमप्रस्तुतप्रशंसावद्बोध्यम् । **इति व्याजस्तुतिः । एकार्थाभिधायकम्** । एकान्वय्यर्थाभिधायकम् । **अनेकेति** । अनेकान्वय्यर्थाभिधायकमित्यर्थः ।

---

१ झ. स्याप्यव ।

होक्तिः। यथा—

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं वाहधारा गलन्ति।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुब्बला जीविदासा ॥ १०४॥

श्वासदण्डादिगतं दीर्घत्वादि शाब्दम्, दिवस-निशादिगतं तु सहार्थसामर्थ्यात्प्रतिपद्यते।

**विनोक्तिः सा विनाऽन्येन यत्रान्यः सन्न नेतरः।**

यथा—**सहेति**।

अत्र दीर्घत्वादीनां श्वासादिभिरन्वयः साक्षादेव शाब्दः, दिवसादिभिस्तु सहान्वयबलात्। **विनोक्तिरिति**।

अत्र सहशब्दार्थः साहित्यम् एकजातीयैककालिकक्रियाद्यन्वयित्वसमनियतम्। 'पुत्रेण सहागतः' इत्यत्र पुत्रप्रतियोगिकसाहित्यवानागत इति शाब्दबोधः। तेन पुत्रवृत्त्यागमनसमानकालिकसमानदेशागमनवान् पितेति मानसो बोधः। तत्र तृतीयान्तस्य विशेषणतया गुणत्वम्। प्रथमान्तस्य विशेष्यतया प्रधानत्वम्।एवं च प्रथमांते आगमनस्य शाब्दोऽन्वयः। तृतीयांते तु सहार्थसामर्थ्यादार्थः। एवं च यत्र गुणप्रधानभावावच्छिन्नयोः शाब्दार्थमर्यादया एकधर्मसंबंधस्तत्रायमलंकारः। समुच्चये तूभयत्र प्राधान्यं, शाब्द एव चैकान्वय इति ततो भेदः। 'चैत्रमैत्रौ सह गच्छतः' इत्यादावपि तथैवेति नायमलंकारः। हृद्यत्वं चालंकारसामान्यलक्षणप्राप्तम्। तेन 'अनेन सार्द्धं विहरांबुराशेः' इत्यादौ नेयम्। हृद्यत्वं चास्याः श्लेषभित्तिकाऽभेदाध्यवसानात्मकेन केवलाभेदाध्यवसानात्मकेन वाऽतिशयेनानुप्राणने भवतीति बोध्यम्। (**सहेति**।) 'सह दिवसनिशाभिर्दीर्घाः श्वासदण्डाः सह मणिवलयैर्बाष्पधारा गलन्ति। तव सुभग वियोगे तस्या उद्विग्नायाः सह च तनुलतया दुर्बला जीविताशा'। (कर्पूरमंजर्या द्वितीयजवनिकांतरे नायिकाया विरहावस्थावर्णनम्।) दंडाकाराः श्वासाः श्वासदण्डाः। बाष्पो नेत्रांबु। अत्र दिवसनिशादौ दीर्घत्वं दुःखदायित्वादौपचारिकम्। इयं धर्मयोरभेदाध्यवसायमूला। **इति सहोक्तिः**। **विनोक्तिरिति**। अत्रापि विनाशब्दार्थ एव विवक्षितः। तेन नञ्-निर्-वि-अंत-

क्वचिदशोभनः, क्वचिच्छोभनः । क्रमेणोदाहरणम्—

अरुचिर्निशया विना शशी शशिना साऽपि विना महत्तमः ।
उभयेन विना मनोभवस्फुरितं नैव चकास्ति कामिनोः ॥ १०५ ॥
मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः ॥ १०६ ॥

**परिवृत्तिर्विनिमयो योऽर्थानां स्यात्समासमैः ॥२७॥**

परिवृत्तिरलंकारः । उदाहरणम्—

---

तत्र शोभनो न, नेतरो नाशोभन इत्यर्थः । तेन केनचिद्विना कस्यचिदशोभनत्वं शोभनत्वं वा प्रतिपाद्यते सा विनोक्तिः । तत्राशोभनत्वं यथा—**अरुचिरिति ।**

शोभनत्वं यथा—**मृगेति ।**

अत्र मृगलोचनया दुष्टसुहृद्विशेषेण[1] च विना नरेन्द्रसूनोर्विचित्रव्यवहारप्रगल्भत्वचन्द्रसुन्दराशयत्वरूपं शोभनत्वमुक्तम् । **परिवृत्तिरिति ।**

परिवृत्तिरिति लक्ष्यालंकारनिर्देशः । पूर्वाचार्याणां तथैवोद्देशदर्शनात् । अतो न लक्ष्यलक्षणसंदेहः । समासमैरिति विभागः । विनिमयो हि केनचिद्वस्तुना दत्तेन कस्यचिदादानम् । तच्च क्वचित्समेन समस्य । क्वचिदसमेनासमस्य । अन्त्यमपि द्विधा—क्वचिन्न्यूनेनोत्तमस्य, क्वचिदुत्तमेन न्यूनस्येति त्रिविधेयमित्यर्थः । समासमत्वं चोपादेयत्वानुपादेयत्वाभ्याम् । तत्राद्यद्वयं यथा—

---

रेण-ऋते-रहित-विकलेत्यादिप्रयोगेऽपि इयमेव । **अरुचिरिति ।** ( अपरवक्त्रं छन्दः । ) न चात्र शशिसहितैव निशा रमणीयेति सहोक्तिध्वनिरेव युक्तः । तत्कृतस्यैव चमत्कारस्य सत्त्वादिति वाच्यम् । वाच्यार्थकृतस्य चमत्कारस्यानपलपनीयत्वात् । **मृगेति ।** (विचित्रेषु व्यवहारेषु प्रतिभा झटिति स्फूर्तिः तस्याः प्रभया प्रकाशेन प्रगल्भः चतुरः । अमृतद्युतिः चन्द्रः तद्वत् सुन्दरः स्वच्छः आशयः अन्तःकरणं यस्य । ) य एव राजपुत्रः स्त्रीमोहितः कृत्यविकलः स एव तया विनाऽतिव्यवहाराभिज्ञः । य एव दुष्टसुहृदालिंगितो विषमहृदयः स एव तेन विनाऽतिसदयहृदय इत्यर्थः । ( मालभारिणी छन्दः । ) **इति विनोक्तिः । कस्यचिदादानमिति ।** परकीयस्य कस्यचिदादानमित्यर्थः । वि

---

१ ठ. मु. पु. द्विशेषं च.

लतानामेतासामुदितकुसुमानां मरुदयं
मतं लास्यं दत्वा श्रयति भृशमामोदमसमम् ।
लतास्त्वध्वन्यानामहह दृशमादाय सहसा
ददत्याधिव्याधिभ्रमिरुदितमोहव्यतिकरम् ॥ १०७ ॥

अत्र प्रथमेऽर्धे समेन समस्य, द्वितीये उत्तमेन न्यूनस्य ।

नानाविधप्रहरणैर्नृप संप्रहारे
स्वीकृत्य दारुणनिनादवतः प्रहारान् ।
दृप्तारिवीरविसरेण वसुंधरेयं
निर्विप्रलम्भपरिरम्भविधिर्वितीर्णा ॥ १०८ ॥

अत्र न्यूनेनोत्तमस्य ।

---

**लतानामिति** ।

अत्र प्रथमार्धे लास्येनोपादेयतया समस्यामोदस्य, द्वितीयार्धे उपादेयतया उत्तमया दृशा आधिव्याधीनामतादृशतया न्यूनानां विनिमयः । अन्त्या यथा—**नानेति** ।

अत्रोत्तमया वसुंधरया न्यूनानां प्रहाराणां विनिमयः ।

---

निमयपदस्य तत्रैव शक्तेः । एवमादाय दानमपि सा । दानादानव्यवहारः कविकल्पित एव न वास्तवस्तत्रालंकारत्वाभावात् । तेन 'क्रीणन्ति यत्र मुक्ताभिर्बदराण्यपि बालिकाः' इत्यत्र नेयम् । परकीयस्येत्युक्तेः 'किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्' इत्यत्र नेयम् । विनिमयाभावात् । **लतानामिति** । ( अयं मरुद्वायुर्लतानाम् असमं अनुपमं आमोदं परिमलं श्रयतीत्यन्वयः । मतं मनोरमं लास्यं नृत्यं दत्वा । अर्थात् लताभ्यः । अध्वन्यानां पांथानाम् । अहह इति खेदे । आधिः मनःपीडा, व्याधिः कायपीडा, भ्रमिः दिग्भ्रमणदर्शको विकारः, रुदितम् रोदनम्, मोहो निश्चेष्टता, एषां व्यतिकरं समूहम् । ) मरुत्संबंधेन लतानां लास्यदर्शनात् लतादर्शनेन च पथिकानामाध्यादिदर्शनाद्दातृत्वं कविकल्पितम् । ( शिखरिणी छन्दः । ) **नानेति** । दृप्तारिर्वीरसमूहेन हे नृप युद्धे त्वच्छस्त्रप्रहारान्स्वीकृत्य [i]यं विरहशून्याऽऽलिंगनवती वसुमती वितीर्णेत्यर्थः। (वसन्ततिलका छन्दः।)

**प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः।**
**तद्भाविकम्**

भूताश्च भाविनश्चेति द्वन्द्वः। भावः कवेरभिप्रायोऽत्रास्तीति भाविकम्। उदाहरणम्—

आसीदञ्जनमत्रेति पश्यामि तव लोचने।
भाविभूषणसंभारां साक्षात्कुर्वे तवाकृतिम्॥ १०९॥

अत्र आद्ये भूतस्य, द्वितीये भाविनो दर्शनम्।

**काव्यलिङ्गं हेतोर्वाक्यपदार्थता॥ २८॥**

---

**प्रत्यक्षा इति।**

भूतभाविन इति द्वन्द्वः न कर्मधारय इत्यविरोधः। भूता भाविनो भावा यत्प्रत्यक्षा इव क्रियन्ते प्रत्यक्षतयाऽभिधीयन्ते तद्भाविकम्। भावः कवेरभिप्रायो निश्चयादिप्रतीतिविषयकोऽत्रास्तीति व्युत्पत्तेरित्यर्थः। उदाहरणम्—**आसीदिति।**

अत्र पूर्वार्धे भूतस्याञ्जनस्य उत्तरार्धे भाविनो भूषणसंभारस्य प्रत्यक्षतयाऽभिधानम्। **काव्यलिङ्गमिति।**

---

**इति परिवृत्तिः। प्रत्यक्षतयेति।** अलौकिकप्रत्यक्षविषया अपि लौकिकप्रत्यक्षविषयतयेत्यर्थः। अभिप्रायो लौकिकप्रत्यक्षविषयत्वेन प्रतिपादनेच्छा। न चेयं भ्रांतिः। भूतभावित्वेनैव निर्देशात्। अंजनाद्यसत्वेऽपि तत्कृतशोभाद्यभिप्रायेण तथाप्रयोगाच्च। न चैवं स्वभावोक्तिः। तत्र वस्तुधर्मो वैचित्र्याधायकः। इह तु कवेस्तन्निबद्धस्य वाऽभिप्राय इति विशेषात्। **आसीदिति।** अत्र यदंजनं दत्तमासीत् इति तद्युक्ते लोचने पश्यामीत्यर्थः। भाविभूषणैः संभ्रियते सा। तद्युक्तामित्यर्थः। (भाविभूषणानां संभारः समूहो यत्र तादृशीम इति वा।) यथाश्रुते आसीदिति पश्यामीत्याद्यन्वये भूतादेर्लौकिकसाक्षात्कार विषयत्वं नोपपादितं स्यात्। अत्रांजनभूषणादिकं विनाऽपि स्वरूपवैलक्षण्येनैव शोभातिशयात्तेषां वैयर्थ्यं ध्वन्यते। क्वचिद्भूतत्वादिनिर्देशं विनाप्येष दृश्यते 'अहं विलोकयेऽद्यापि युध्यंतेऽत्र सुरासुराः' इत्यादौ। अत्रेदं चिंत्यम् असंबंधे संबंधरूपातिशयोक्त्यैव गतार्थोऽयम्। प्रत्यक्षासंबंधेऽपि तत्संबंधवर्णनात भूतादिवस्त्वसंबंधेऽपि तत्संबंधवर्णनाच्चेति। साऽनुप्राणिकाऽत्रेति कश्चित्। **इ**

वाक्यार्थता यथा—

वपुःप्रादुर्भावादनुमितमिदं जन्मनि पुरा
पुरारे न प्रायः क्वचिदपि भवन्तं प्रणतवान्।
नमन्मुक्तः संप्रत्यहमतनुरग्रेऽप्यनतिभाक्
महेश क्षन्तव्यं तदिदमपराधद्वयमपि ॥ ११० ॥

अनेकपदार्थता यथा—

प्रणयिसखीसलीलपरिहासरसाधिगतैः
ललितशिरीषपुष्पहननैरपि ताम्यति यत्।

अत्र विवक्षितविवेकेन हेतुवचनं काव्यलिङ्गमिति लक्षणम्। वाक्यपदार्थतेति विभागः। वाक्यार्थता पदार्थता चेत्यर्थः। तत्र वाक्यार्थता यथा—**वपुरिति।** अत्र पुरा क्वचिदपि नाहं भवन्तं प्रणतवान् अग्रेऽप्यहमनतिभागित्यवान्तरवाक्ययोरर्थोऽनमनमपराधे हेतुः। अनेकपदार्थता यथा—**प्रणयीति।**

---

**भाविकम्। हेतोरिति।** स्वतोऽनुपपद्यमानार्थोपपादकहेतोर्वचनमित्यर्थः। **पदार्थतेति।** पदमप्येकमनेकं चेति बोध्यम्। व्याप्त्याद्यनिर्देशान्नानुमानसंकरः। श्रोतुर्येल्लिंगकानुमितिबुबोधयिषया कवेर्व्याप्त्यादिविशिष्टहेतुबोधककाव्यनिर्माणं तल्लिंगमनुमानविषयः। काव्यलिंगजानुमितिस्तु न कविना श्रोतुर्बुबोधयिषिता किं तु श्रोतर्युत्पिपादयिषितेति भेद इत्यन्ये। **वपुरिति।** क्वचित्कस्मिन्नपि जन्मनि। (पुरा प्रायः भवन्तं अहं न प्रणतवान्। इदं वपुषः प्रादुर्भावादनुमितम्।) त्वन्नतौ शरीरोत्पत्तेरभावात्। (संप्रति नमन्मुक्तः अतनुः शरीरशून्यः अहं अग्रेऽपि अनतिभाक् नतिरहितः। इदं अपराधद्वयं क्षंतव्यम्। शिखरिणी छन्दः।) अग्रेऽप्यनतौ अतनुत्वमेकपदार्थो हेतुः। अतनुत्वे च नमन्मुक्त इत्यनेकपदार्थो हेतुः। **अनमनमपराधे इति।** यद्यप्यनमनमेवापराधस्तयोश्च न हेतुहेतुमद्भावस्तथापि तदिदमित्यस्य सर्वनाम्नां बुद्धिस्थपरामर्शकत्वात् दुरितविशेषरूपमित्यर्थः। क्षंतव्यमित्यस्य च लक्षणया 'नाशनीयमित्यर्थ इत्यदोषः। **प्रणयीति।** (मालतीमाधवे पंचमांके) मालतीवधोद्यतमघोरघण्टं प्रति माधवस्येयमुक्तिः। प्रियसख्याः सलीलो यो हास्यरसस्तेन प्राप्तैः। ललितम् मनोहरम्। (तत्र वपुषि वधाय शस्त्रं उपाक्षिपतः तव शिरसि एषः

---

१ प्र. नैवाहं इति वा पाठः। २ ज. तिमान्।
३ हेतोः इत्युद्योतसम्मतः पाठः।

वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः ॥ १११ ॥

एकपदार्थता यथा—

भस्मोद्धूलन भद्रमस्तु भवते रुद्राक्षमाले शुभं
हा सोपानपरम्परां गिरिसुताकान्तालयालंकृतिम् ।
अद्याराधनतोषितेन विभुना युष्मत्सपर्यासुखा-
लोकोच्छेदिनि मोक्षनामनि महामोहे निधीयामहे ॥ ११२ ॥

एषु अपराधद्वये पूर्वापरजन्मनोरनमनम्, भुजपाते शस्त्रोपक्षेपः, महामोहे सुखालोकोच्छेदित्वं च यथाक्रममुक्तरूपो हेतुः ।

---

अत्र शस्त्रोपक्षेपो भुजपाते हेतुः । न चायं वाक्यार्थः । 'शस्त्रमुपक्षिपतः' इत्येतावन्मात्रस्यावाक्यार्थत्वात् । तत्र वपुषि वधाय शस्त्रमुपक्षिपत इत्यस्यापि न वाक्यत्वम् । विशेषणत्वादिति तदर्थस्यापि हेतुत्वे न वाक्यार्थस्य हेतुत्वमिति । एकपदार्थता यथा—**भस्मेति** ।

अत्र महामोहत्वे सुखालोकोच्छेदिता हेतुः । तच्च समासादेकपदार्थ एव । अर्थान्तरन्यासे तटस्थतयोपनिबद्धस्य हेतुत्वे पर्यवसानम्, इह तु साक्षादेव हेतुविभक्त्यादिना हेतुतयोपनिबद्ध इति ततो भेदः ।

---

भुजः अकांडे अकाले यमदंड इव पततु इत्यन्वयः । नर्कुटकं छन्दः ।) **अवाक्यार्थत्वादिति** । विशेषणीभूतार्थोपस्थापकत्वेन विशेष्यसाकांक्षत्वादिति भावः। **भस्मेति** । शिवप्रसादेन जाततत्त्वज्ञानस्येयमुक्तिः । हा सोपानपरंपराम् । तस्याः शोच्यतेत्यर्थः । तत्संस्कारकर्त्रभावात् । ( गिरिसुताकांतस्य शिवस्य आलयः प्रासादः तस्य अलंकृतिम् अलंकारभूताम् । युष्माकं भस्मोद्धूलनादीनां या सपर्या पूजा तत्सुखस्य आलोकः प्रकाशः तदुच्छेदके तन्नाशके मोक्षसंज्ञके महामोहे निधीयामहे । 'वयम्' इति शेषः । शार्दूलविक्रीडितं छन्दः ।) **तटस्थतयेति** । परस्परमनन्वितत्वेनेत्यर्थः । **पर्यवसानमिति** । सामान्याद्यर्थस्योक्तस्य प्रामाण्यग्रहहेतुत्वमित्यर्थः । **इह तु साक्षादेवेति** । तत्तत्पदार्थनिरूपितहेतुतयोपनिबद्ध इत्यर्थः । हेतुविभक्त्यादिनेति क्वाचित्कोऽपपाठः । गम्यमानहेतुत्वकस्यैव हेतोः सुंदरत्वेन प्राचीनैः काव्यलिंगाभ्युपगमात् । अत एव वपुःप्रादुर्भावादनुमितमित्यंशे नाऽयमलंकार इत्याहुः। सामान्यविशेषभावसंबंधानालिंगितत्वेन ततो भेद इत्यन्ये । केचित्तु निर्हेतुरूप-

**पर्यायोक्तं विना वाच्यवाचकत्वेन यद्वचः ।**

वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेण यत् प्रतिपादनम्, तत् ( पर्यायेण भङ्ग्यन्तरेण कथनात् ) पर्यायोक्तम् । उदाहरणम्—

यं प्रेक्ष्य चिररूढाऽपि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ ११३ ॥

अत्र ऐरावणशक्रौ मदमानमुक्तौ जाताविति व्यङ्ग्यमपि शब्देनोच्यते, तेन यदेवोच्यते तदेव व्यङ्ग्यम्, यथा तु व्यङ्ग्यं न तथोच्यते; यथा गवि शुक्ले चलति दृष्टे, 'गौः शुक्लश्चलति'—इति विकल्पः,

---

**पर्यायोक्तमिति ।**

वाच्यवाचकभावभिन्नेनावगमनव्यापारेणार्थाद्वाच्यस्यैव यदभिधानं तत्पर्यायोक्तम् । पर्यायेण भङ्ग्यन्तरेणाभिधानात् । ध्वनेस्तु न वाच्य एवार्थो विषय इति[1] ततो भेदः । उदाहरणम्—**यमिति ।**

अत्रैक एवार्थ ऐरावतशक्रौ मदमानविमुक्तौ जाताविति व्यञ्जनया मदमानाभ्यां तयोरधिकरणयोर्निवासप्रीतिरुज्झितेत्यभिधया च प्रतिपाद्यते । तेन च यदेवोच्यते तदेव व्यङ्ग्यम् । न चैवं प्रतिपन्नस्यैव प्रतिपत्तिरफलेति किं व्यापारद्वयेनेति वाच्यम् । यतो यथा व्यङ्ग्यं तथा नोच्यते । प्रकारयोर्भेदात् । एकरूप एव वस्तुनि प्रकारभेद एव कथं स्यादिति चेत्, यथा शुक्ले गवि चलति

---

दोषाभावः काव्यलिंगम् । हेतुहेतुमद्भावस्य वस्तुसिद्धत्वेन कविप्रतिभानिर्वर्त्यत्वाभावात् । तत्प्रयुक्तचमत्काराभावेनास्यालंकारताया दुरुपपादत्वाच्च । श्लेषादिसंमिश्रणेऽपि तत्कृत एव चमत्कारो नैतत्कृत इत्याहुः । **इति काव्यलिंगम् । पर्यायोक्तमिति । वचः ।** प्रतिपादनम् । अवगमनव्यापारो व्यंजना । भंग्यंतरं प्रकारभेदः । तेन न पौनरुक्त्यम् । **ध्वनेस्त्विति ।** व्यंग्यस्यागूढत्वादिति भावः । ( **यमिति** । ) यं रावणम् । हरेः इंद्रस्य । **एक एवार्थ इति ।** विमोचननिवासप्रीतित्यागयोरेकत्र पर्यवसानादिति भावः । **तेन चेति ।** तथा च लक्षणसंगतिः । पौनरुक्त्यं शंकते । **न चेति । यथेति ।** येन प्रकारेण व्यंग्यं तेन रूपेण शब्देन नोच्यत इत्यर्थः । एकस्यैव प्रकारभेदेन वाच्यत्वव्यंग्यत्वयोरविरोधः । यथा यावककुसुंभजपाकुसुमादिरूपाणां रक्तत्वादिना वाच्यत्वेऽपि तत्तद्वैजात्यरूपेण प्रत्यक्षत्वमेव न वाच्यत्वं तथेहापीति भावः ।

---

१ छ. ज. वस्तु यत् ।

**यदेव दृष्टं तदेव विकल्पयति, न तु यथा दृष्टं तथा। यतोऽभिन्नाऽसंसृष्टत्वेन दृष्टम्, भेदसंसर्गाभ्यां विकल्पयति।**

---

निर्विकल्पकसविकल्पकयोः एक एव ह्यर्थस्ताभ्यां विषयीक्रियते। न पुनर्यथा निर्विकल्पकविषयस्तथैव सविकल्पकेनाऽपि विषयीक्रियते। भिन्नत्वसंसृष्टत्वाविषयकं निर्विकल्पकं, भिन्नत्वसंसृष्टत्वप्रकारकं तु सविकल्पकमिति।

---

**न पुनर्यथेति**। निर्विकल्पके शुक्लतदाश्रयगोत्वतदाश्रयचलनतदाश्रया विकलिता भासंते, सविकल्पके तु संसृष्टतयेत्यर्थः। निर्विकल्पकस्य विशिष्टधीहेतुत्वादिति भावः। **भिन्नत्वेति**। भेदोऽतद्व्यावृत्तिस्तच्छून्यत्वेन संसर्गराहित्येन च निर्विकल्पकविषयता। भेदोऽतद्व्यावृत्तिः परनये। तस्या सविकल्पके विशेषणत्वं बाह्या मन्यंते। अन्यमते **संसृष्टत्वेति**। प्रकारशब्दो विषयमात्रपरः। एवं च यथा निर्विकल्पकस्य विशिष्टविज्ञानहेतुत्वात्ततो वैलक्षण्यं तथा निवासप्रीतित्यागरूपवाच्यज्ञानस्य मदमुक्तत्वरूपव्यंग्यज्ञानहेतुत्वाद्वैलक्षण्यमिति भावः। यद्वा निर्विकल्पके किंचित्त्वेन वस्तु भासते, सविकल्पके तु तत्तन्नामरूपजात्यादिप्रकारेणेति 'न पुनर्यथा' इत्यादेरर्थः। इदमेव भिन्नत्वाविषयकत्वादीति बोध्यम्। अत्र व्यंग्यमगूढं वाच्यादचारु चेति न ध्वनित्वम्। 'नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ' इत्यत्रापि भगवान् वासुदेवो राहुशिरश्छेदकारित्वरूपेण स्वासाधारणधर्मेण व्यंग्यस्ततोऽपि चारुतरेण राहुवधूकुचवैयर्थ्यकारित्वेन रूपान्तरेणाभिहितः। केन चिद्रूपेण व्यंजनया लभ्यस्यार्थस्य ततोऽपि चारुतरेण रूपेण यत्र वाच्यतेति लक्षणतात्पर्यात्। यद्यपि भगवतः पूर्वप्रक्रान्तत्वाद्यच्छब्देनाभिधानाच्च न व्यंग्यत्वम्, तथापि व्यंग्यतावच्छेदकरूपेण वाच्यत्वाभावाद्व्यङ्ग्यत्वमेव। एवं च प्रकारभेदाद्व्यङ्ग्यस्यैवाभिधाविषयत्वं युक्तम्। न च प्राप्ताप्राप्तविवेकन्यायेन धर्मांशे एव व्यंग्यत्वं न धर्म्यंशे इति वाच्यम्। धर्मिण स्वरूपतोऽवाच्यत्वात्। यदि धर्मी स्वरूपतः कस्यचिद्वाच्यः स्यात्स्यादपि तथा। औपाधिकभेदेन घटाकाशादिषु भेदप्रतीतिवत् तत्तद्धर्मरूपोपाधिभेदेन धर्मिणोऽपि भेदेन धर्मिणोऽपि व्यंग्यत्वाच्च। एतेन 'व्यंग्यस्य प्रकारान्तरेणाभिधानासंभवात् कार्यमुखेन कारणाभिधानं पर्यायोक्तम्। उदाहरणे राहुवधूकुचनैष्फल्यरूपेण कार्येण राहुशिरश्छेदः कारणरूपो गम्यते' इत्यलंकारसर्वस्वोक्तमपास्तम्। प्रकाशोदाहरणविरोधाच्च। यत्तु 'पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम्। शुकं भो-

**उदात्तं वस्तुनः संपत्**

संपत् समृद्धियोगः । यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिर्हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः ।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुकाः
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ११४ ॥

**महतां चोपलक्षणम् ॥ २९ ॥**

उपलक्षणमङ्गभावः, अर्थादुपलक्षणीयेऽर्थे । उदाहरणम्—

तदिदमरण्यं यस्मिन्दशरथवचनाऽनुपालनव्यसनी ।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः ॥ ११५ ॥

**उदात्तमिति ।**

संपत्समृद्धियोगः । न तु तस्यैवातिशयः । उदाहरणम्—**मुक्ता इति ।** अत्र विद्वद्भवनस्य मुक्तादिधनसमृद्धियोगः । **महतामिति ।** महतां यदुपलक्षणमङ्गभावः अर्थाद्वर्णनीये, तदप्युदात्तमित्यर्थः । उदाहरणम्—**तदिदमिति ।**

---

जयितुं यामि युवाभ्यामास्यतामिह ॥ अत्र नायिकां नायकेन संगमय्य शुकभोजनव्याजेन निर्गच्छन्त्या सख्या तत्स्वाच्छन्द्यरूपेष्टसाधनं पर्यायोक्तम्' इति । तत्तु ध्वनिमर्यादां नातिशेते इति दिक् । एवं च 'अनायि देशः कतमस्त्वयाऽद्य वसन्तमुक्तस्य दशां वनस्य' (नैषधेऽष्टमसर्गे २९ पद्यम्) इत्यत्रापि अयमेव । 'अयं देशोऽलंकर्तव्यः' इत्यादौ चेत्यलम् । इति **पर्यायोक्तम् । उदात्तमिति ।** महतां चोपलक्षणमिति वक्ष्यमाणतया नपुंसकानपुंसकयोरेकशेषः । **वस्तुनः ।** धनशौर्यौदार्यादेः । एतेन 'शौर्यादेस्तदुक्तौ अत्युक्तिनामा पृथगलंकारः' इत्यपास्तम् । अत्रासंबंधे संबंधातिशयोक्तिरनुप्राणिका । **मुक्ता इति ।** (केलौ क्रीडायां विसूत्राः छिन्नसूत्राः ये हाराः तेभ्यः गलिताः ।) बाला षोडशवर्षा । (त्यागलीला दानलीला सेव आचरितमित्यर्थः । शार्दूलविक्रीडितं छंदः ।) **समृद्धियोग इति ।** तेन वर्णनीयनृपतेः समृध्यतिशयः । 'सौधाग्राणि पुरस्यास्य स्पृशंति विधुमंडलम्' इत्यादौ पौरसमृद्धिर्व्यंग्येति व्यंग्योऽयम् । **वर्णनीये इति ।** अंगिनीत्यर्थः । **तदिदमिति ।** पुष्पकविमानस्थस्य लक्ष्मणस्यांगदं प्रतीयमुक्तिः । ( आर्या छन्दः ।)

---

१ प्र. स्तद्दान ।

**न चात्र वीरो रसः । तस्येहाङ्गत्वात् ।**

**तत्सिद्धिहेतावेकस्मिन्यत्राऽन्यत्तत्करं भवेत् ।**
**समुच्चयोऽसौ**

**तस्य ( प्रस्तुतस्य कार्यस्य ) एकस्मिन् साधके स्थिते साधकान्तराणि यत्र [1]संभवन्ति, स समुच्चयः । उदाहरणम्—**

**दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं**
**गाढं प्रेम नवं वयोऽतिकठिनाः प्राणाः कुलं निर्मलम् ।**

---

अत्रैतादृशो महान्रामो दण्डकाया वर्णनीयाया अङ्गम् । नन्वत्र रामगत उत्साहातिशय एव चमत्कारनिदानं तस्य प्रधानत्वाद्विच्छित्त्यन्तराभावाच्च किंविषयोऽयमलंकारव्यपदेश इति वाच्यम् । नह्यत्र वीरो रसः प्रधानम् । तस्येहाङ्गत्वात् । **तत्सिद्धीति ।**

तत्सिद्धिहेतौ तस्य प्रस्तुतस्य कार्यस्य साधके । समाधावतुल्यकक्षयोः कारणयोरुपादानमत्र तु तुल्यकक्षयोरिति विशेषः। उदाहरणम्—**दुर्वारा इति ।**

---

महत्वं च रामस्य दशरथाज्ञावशात्साम्राज्यत्यागपूर्वकवनवासात् बाहुमात्रसाहाय्येन सकलरक्षःक्षयकरणाच्च । अत्र दंडकारण्यस्याऽङ्गित्वम्, रामस्यांगत्वम् । ईदृशो रामो यत्र स्थित इत्यरण्यस्याधिक्यम् । **उत्साहातिशय एवेति ।** वीरप्रधानस्य रामस्य बाहुसहायत्वेन तदतिशयप्रतीतेः रक्षःक्षयस्यानुभावस्य प्रतीतेश्च ध्वनित्वं स्यादिति भावः । **अंगत्वादिति ।** अंगोत्कर्षकत्वादित्यर्थः । अंगांगस्य चाप्राधान्यान्न ध्वनित्वमिति भावः । रामविषयकरतिभावस्याप्यपरिपुष्टत्वान्न भावध्वनित्वम् । **इत्युदात्तम् । इति विशेष इति ।** समाधौ हि एकेन कार्ये निष्पाद्यमानेऽन्येनाकस्मादापतता सौकर्यादिरूपातिशयसंपादनम् । ( अत्र तु ) एककार्यसंपत्तौ सर्वेषां खलेकपोतन्यायेन पातः, कार्यस्य च न कोऽप्यतिशय इति भावः । काव्यलिंगे हेतुत्वमात्रं विवक्षितं न तु हेतूनां गुणप्रधानभावस्यैकत्वानेकत्वस्य वा चिन्ता । अत्र तु एकस्यैव तत्कार्यकारित्वेऽन्येषां साहाय्यमात्रमिति ततो विशेषः । **दुर्वारा इति ।** ( मयूरसूनोः शंकुकर्णस्य पद्यमिति शाङ्र्गधरपद्धतौ स्पष्टम् ।) स्वं प्रति विधिं प्रति वा काचिद्वदति। स्मरस्य मदनस्य मार्गणाः बाणाः।) दूरे प्रवासात्। गाढं अनिशयितम्।

---

[1] ज. सन्ति ।

स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थं शठः ॥ ११६ ॥

अत्र विरहासहत्वं स्मरमार्गणा एव कुर्वन्ति, तदुपरि प्रियतमदूरस्थित्यादि उपात्तम्। एष एव समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति न पृथक् लक्ष्यते। तथाहि—

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतशालिनी[1]
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ११७ ॥

अत्र सतां योगः। उक्तोदाहरणे त्वसतां योगः।

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः।

---

अत्र स्मरमार्गणा एव विरहासहत्वं कुर्वन्ति ततोऽधिकं प्रियतमदूरस्थित्याद्युपात्तम्। एष एवोक्तलक्षणः समुच्चयः सद्योगेऽसद्योगे सदसद्योगे च पर्यवस्यतीति यत्कैश्चित्ते पृथग्लक्षितास्तदयुक्तम्। तथाहि—**कुलमिति**।

अत्र कुलादीनां समीचीनानामेव योगः। दुर्वारा इत्याद्युक्तोदाहरणे स्मरमार्गणादीनामसमीचीनानाम्। **शशीति**।

---

कुलनैर्मल्यात्स्वाच्छंद्याभावः। न चैवं धैर्यमेव कार्यमत आह। स्त्रीत्वमिति। मन्मथसुहृत्। विरहिणीपीडकत्वात्। कालः वसंतः। अक्षमः मारणे। झटिति नाशाकर्तृत्वात्। अचतुराः नायकादिघटनाऽसमर्थाः। शठः पीडादायीति विरहविशेषणम्। शठेति विधिसंबोधनं वा। ( शार्दूलविक्रीडितं छन्दः। ) **पृथगिति**। सद्योगसमुच्चयत्वादिनेत्यर्थः। **कुलमिति**। निर्मलं कुलम्। सुंदरता। वेदादिज्ञानम्। अतिशयितं बलम्। लक्ष्मीवृद्धिः। अकुंठं प्रभुत्वम्। ( प्रकृत्या सुभगाः सुन्दराः भावाः पदार्थाः।) दर्पोऽहंकारोऽपथप्रवर्तकः। अंकुशास्तत्प्रतिबंधकाः। ( हरिणी छन्दः। ) कुलादीनां प्रकृतिसुगमत्वेन समीचीनत्वम्। अत्र निर्मलकुले दर्पतदभावहेतौ सत्येव भद्रमूर्त्यादिकमपि तत्त्वेनोपात्तम्। एवं स्मरमार्गणादीनां विरहिणीदुःखदत्वादसमीचीनत्वम्। **शशीति**। (भर्तृहरिकृते नीतिशतके पद्यम्। स्वाकृतेः शोभनाकृतेः। दुर्गतः दरिद्रः। शल्यानि

---

1 झ. श्रुति।

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ११८ ॥

अत्र शशिनि धूसरे शल्ये शल्यांतराणीति शोभनाऽशोभनयोगः ।

**स त्वन्यो युगपद्या गुणक्रियाः ॥ ३० ॥**

गुणौ च क्रिये च गुणक्रिये च गुणक्रियाः । क्रमेणोदाहरणम्—

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च ।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥११९॥

---

अत्र सदसतोर्योगः । दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वात् ।' एतच्चिन्त्यम् । पूर्वं दूरस्थित्यादिविशेषणेन, धूसरत्वादिनाऽत्राप्यसम्यक्त्वमिति । समुच्चयान्तरमाह—**स त्वन्य इति ।**

अत्र गुणाः क्रियाश्चेति विग्रहे संख्याविशेषस्याविवक्षणात् विशेषविवक्षाविरहेण च सजातीयवद्विजातीयस्यापि यौगपद्यस्य लाभात् गुणौ च क्रिये च गुणक्रिये च युगपद्भवतः, स त्रिरूपः समुच्चयः । तत्र गुणयोर्यौगपद्यं यथा—**विदलितेति ।**

---

बाणाग्राणि । पृथ्वी वृत्तम् ।) शशी स्वरूपेण सन्नपि दिवसधूसरत्वेनासन् । एवमग्रेऽपि । एवमत्र सदसतां शश्यादीनां योगः। **अत्र सदसतोर्योगः दुर्जनस्यासत्त्वात् शश्यादीनां सत्त्वादिति ।** इदं चित्यम् । एवं हि सहचरभिन्नता स्यात् । सर्वत्र विशेष्यस्य शोभनत्वं विशेषणस्याशोभनत्वं च प्रक्रांतमिति भग्नप्रक्रमता वा स्यात् । तस्मान्नृपांगणमसद्गुतमिति पाठो युक्तः । सदसदिति च कर्मधारयो युक्तः । अत्रैकैकमपि मानसशल्यभूतज्ञानजनने हेतुस्तदपि षट्कमुपात्तमिति लक्षणसमन्वयः । **पूर्वमिति ।** प्रियतमः शोभनोऽपि दोषेणाशुभ इत्यर्थः । चिताबीजं तु एकस्य तथात्वेऽपि मार्गणवयोां केवलानामपि विरहिणीदुःखदानां सत्त्वमिति असद्योगोदाहरणमेव तउक्तोदाहरणेषु सतां योगस्यासतां योगस्य सदसद्योगस्य वा युक्तत्वायुक्तत्वस्य वाऽप्रतीतेर्न समस्य विषमस्य वाऽलंकारस्यात्र प्रसंग इति दिक् । **शेषविवक्षाविरहेणेति ।** गुणत्वक्रियात्वरूपविशेषेत्यर्थः । केचित्तु गुणौ क्रिये च गुणक्रियाः, गुणश्च क्रिया च गुणक्रिये, तयोरेकशेषेण वक्ष्यमार्थलाभ इत्याहुः । **युगपदिति ।** क्रमव्यावृत्त्यर्थम् । ( **विदलितेति ।** विदनाशितं सकलानां अरीणां कुलं येन तत् । बलम् सैन्यम् । प्रकृष्टाः खलाः

अयमेकपदे तया वियोगः प्रियया चोपनतः सुदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥ १२० ॥
कलुषं च तवाहितेष्वकस्मात्सितपङ्केरुहसोदरश्रि चक्षुः ।
पतितं च महीपतीन्द्र तेषां वपुषि प्रस्फुटमापदां कटाक्षैः ॥ १२१ ॥

'धुनोति चासिं तनुते च कीर्तिम्'–इत्यादेः, 'कृपाणपाणिश्च भवान् रणक्षितौ, ससाधुवादाश्च सुराः सुरालये'–इत्यादेश्च दर्शनात्, 'व्यधिकरणे'–इति 'एकस्मिन् देशे'–इति च न वाच्यम् ।

**एकं क्रमेणानेकस्मिन्पर्यायः**

**एकं वस्तु क्रमेणानेकस्मिन् भवति क्रियते वा, स पर्यायः ।**

---

अत्र विमलत्वमलिनत्वयोः । क्रिययोर्यथा—**अयमिति** ।

अत्रोपगतो[1] भवितव्यं चेति क्रिययोः।गुणक्रिययोर्यथा—**कलुषमिति** ।

अत्र कलुषत्वपतनयोर्गुणक्रिययोः । अत्र कश्चिद्वैयधिकरण्य एव समुच्चय इत्याह । तन्न युक्तम् । 'धुनोति चासि तनुते च कीर्तिम्' इत्यादौ सामानाधिकरण्येऽपि दर्शनात् । केचित्तु सामानाधिकरण्य एवायमित्याहुस्तदपि न सम्यक् । 'कृपाणपाणिश्च भवान्रणक्षितौ ससाधुवादाश्च सुराः सुरालये' इत्यादौ वैयधिकरण्येऽपि तद्दर्शनात् । **एकमिति** ।

एकत्वेन विवक्षितं वस्तु यत्र क्रमेणानेकस्मिन्भवति क्रियते वा स एकः पर्यायः । अत्र क्रमेणेति समुच्चयव्यावर्तनाय । प्रयोजकानिर्देशतान्निर्देशौ भवतिकरोत्यर्थौ । न तु स्वाभाविकत्वास्वाभाविकत्वे । वृषलक्ष्मणः कण्ठे कालकूटवासस्यास्वाभाविकत्वेन भवतीत्यत्रानुदाहरणत्वापत्तेः ।

---

दुष्टाः । आर्या छन्दः ।) **अत्रेति** । तयोराश्रयभेदेन चाभ्यां समुच्चय इत्यर्थः । (**अयमिति** । विक्रमोर्वशीये चतुर्थाङ्के पुरूरवस उक्तिः ।) एकपदे अकस्मात् । (प्रियया उर्वश्या । उपनतः प्राप्तः । निरातपत्वेन आतपराहित्येन रम्यैः । भवितव्यम् भूतम् । मालभारिणी छन्दः ।) **अत्रेति** । अत्राप्याश्रयभेदः । ( **कलुषमिति** । स्वभावतः सितपंकेरुहसोदरा श्वेतकमलतुल्या श्रीः यस्य तादृशं चक्षुः अहितेषु शत्रुषु विषये अकस्मात् कलुषं क्रोधात् रक्तं च । मालभारिणी छन्दः ।) **वैयधिकरण्ये एवेति** । आश्रयभेद एवेत्यर्थः । **इति समुच्चयः । समुच्चयेति** । वक्ष्यमाणविशेषालंकारद्वितीयभेदवारणाय चेत्यपि

---

१ प्र. पगतः इति पाठः ।

क्रमणादाहरणम्—

**नन्वाश्रयस्थितिरियं तव कालकूट**
**केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।**
**प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ**
**कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ १२२ ॥**

यथा वा—

**बिम्बोष्ठ एव रागस्ते तन्वि पूर्वमदृश्यत ।**
**अधुना हृदयेऽप्येष मृगशावाक्षि लक्ष्यते ॥ १२३ ॥**

---

तत्राद्यो यथा—**नन्विति ।**

अत्र कालकूटस्य वस्तुत एकस्यानेकत्र वासे प्रयोजकं किंचिदपि नोक्तम्। न केवलमयं वास्तविक एकत्वे, किं त्वारोपितेऽपि । यथा—**बिंबोष्ठ एवेति ।**

---

बोध्यम् । तत्र यौगपद्यसत्त्वादिति भावः । **नन्विति ।** (भल्लटकविकृते भल्लटशतके पद्यम् । ) आश्रयस्थितिः आश्रयणरीतिः । विशिष्टपदा विशिष्टाधिकरणा । ( वसन्ततिलका छन्दः । ) अत्राधारभेदाद्भिन्न आधेय एकत्वेनाध्यवसितः । **श्रोणीति ।** श्रोणीभागादीनां प्राथमिकाधारत्वमार्थम् । सेवते इत्यनेन मध्ये पूर्वमतनुतासत्ता बोधिता । एवमग्रेऽपि । अत एव विनिमयः संगच्छते । तनुता कार्श्यम् । तरलगतयः चंचलगतयः चंचलदर्शनं च । कुचसचिवताम् सद्वितीयताम् । धत्ते इत्यनेन तस्मिन्प्रागद्वितीयता या स्थिता सा वक्त्रेण गृहीतेति बोधितम् । मुखेऽद्वितीयत्वं निरुपमत्वम्, वक्षसि द्वितीयराहित्यम्, तयोश्चाभेदाध्यवसायः । कुचसचिववक्षस्त्वेनैव मुखस्य निरुपमत्वम्। अत्र तनुत्वत्यागादिना तत्तदुत्कर्षो व्यंजनया बोध्यते । **विंबोष्ठ एवेति ।** न चैकसंबंधनाशोत्तरमपरसंबंधे सत्येव लोके पर्यायप्रसिद्धेः कथमिदमुदाहरणमिति वाच्यम् । एकमनेकस्मिन्क्रमेणेत्येव लक्षणात् । शब्दसाम्यमात्रेण लौकिका-

---

१ छ. दृश्यते.

२ 'श्रोणीबन्धस्त्यजति तनुतां सेवते मध्यभागः । पद्भ्यां मुक्तास्तरलगतयः संश्रिता लोचनाभ्याम् । धत्ते वक्षः कुचसचिवतामद्वितीयं च वक्त्रं तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥' अयं श्लोकः काव्यप्रकाशपुस्तके क्वचित् दृश्यते ।

रागस्य वस्तुतो भेदेऽप्येकतयाऽध्यवसितत्वादेकत्वमविरुद्धम् ।

तं ताण सिरिसहोअररअणाहरणम्मि हिअअमेक्करसम् ।
बिम्बाहरे पिआणं णिवेसिअं कुसुमबाणेन ॥ १२४ ॥

**अन्यस्ततोऽन्यथा ।**

अनेकमेकस्मिन् क्रमेण भवति क्रियते वा, सोऽन्यः । क्रमेणोदाहरणम्—

मधुरिमरुचिरं वचः खलानाममृतमहो प्रथमं पृथु व्यनक्ति ।
अथ कथयति मोहहेतुमन्तर्गतमिव हालहलं विषं तदेव ॥१२५॥

तद्गेहं नतभित्ति मन्दिरमिदं लब्धावकाशं दिवः

---

अत्र प्रयोजकानिर्देशः स्फुट एव । रागपदार्थस्य त्वोष्ठे लौहित्यात्मकतया हृदये तु स्नेहात्मकत्वेन भेदेऽप्येकत्वस्याध्यवसानान्नैकत्वविवक्षाविरोधः । द्वितीयो यथा—**तत्ताणेति ।**

अत्र 'कुसुमबाणेन'इति प्रयोजकनिर्देशः । **अन्य इति ।**

अनेकमेकस्मिन्क्रमेण यद्भवति क्रियते वा, सोऽन्यः पर्याय इत्यर्थः । पूर्ववद्व्याख्येयम् । तत्र भवत्यर्थे यथा—**मधुरिमेति ।**

अत्रैकस्मिन्खलवचसि क्रमेणामृतव्यञ्जने विषकथने च न प्रयोजकानिर्देशः । करोत्यर्थे यथा—**तद्गेहमिति ।**

---

र्थाविवक्षणात् । एतेनात्र वर्धमानालंकारः पृथगिति अपास्तम् । ( **तत्ताणेति** । ) 'तत्तेषां श्रीसहोदररत्नाभरणे हृदयमेकरसम् । बिबाधरे प्रियाणां निवेशितं कुसुमबाणेन ॥' श्रीसहोदरं रत्नं कौस्तुभस्तदाभरणे हरौ । एकरसं तत्परम् । कामेन प्रियाबिंबाधरचुंबनाद्यासक्तं कृतमित्यर्थः । केचित्तु यदसुराणां हृदयं विजिगीषाज्वलनजाज्वल्यमानं श्रीसहोदररत्नानामासमंतात् हरणे तत्परमासीत्, तत्सुकुमारतरोपकरणेनाऽपि कामेन प्रियाबिबाधरे निवेशितं सकलरत्नसारतुल्यो बिंबाधर इति तेषामभिमानोत्पत्तेः । एवं च व्यंग्योपमाऽत्रेत्याहुः । तन्मतेऽपि हरणस्य वैषयिकाधारत्वात्पर्यायाक्षतिरेव । ( गाथा छन्दः । ) अत्राऽपि क्रमेणेति समुच्चयवारणाय । ( **मधुरिमेति** । ) मधुरिम्णा रुचिरम् । अथ ( विचारानंतरम् ) मोहहेतुं तदेवांतर्गतं विषं कथयतीवेत्यन्वयः । ( पुष्पिताग्रा छन्दः । **तद्गेहमिति** । ) नताभित्ति खर्वम् । दिवः स्वर्गाल्लब्धावकाशम् । मं-

---

१ ठ. मु. पु. स्नेहाद्यात्मक ।

सा धेनुर्जरती नदन्ति करिणामेता घनाभा घटाः।
स क्षुद्रो मुसलध्वनिः कलमिदं संगीतकं योषिताम्
आश्चर्यं दिवसैर्द्विजोऽयमियतीं भूमिं समारोपितः॥ १२६॥

अत्र एकस्यैव हानोपादानयोरविवक्षितत्वात् न परिवृत्तिः।

**अनुमानं तदुक्तं यत्साध्यसाधनयोर्वचः॥ ३१॥**

पक्षधर्मान्वयव्यतिरेकित्वेन त्रिरूपो हेतुः साधनम्, धर्मिणि अयोगव्यवच्छेदो व्यापकस्य साध्यम्। यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः॥ १२७॥

---

अत्रैकस्मिन्द्विजे तद्देहतन्मन्दिरयोरनेकैः दिवसैरिति प्रयोजकनिर्देशः। न चेयं परिवृत्तिः। हानोपादानयोरविवक्षितत्वात्। **अनुमानमिति**।

पक्षे संबन्धः, सपक्षवृत्तित्वं, विपक्षावृत्तित्वं चेति रूपत्रयवान्हेतुः साधनम्। व्यापकत्वाभिमतस्य पक्षेऽयोगव्यवच्छेदो व्यापकसंबन्धपर्यवसन्नः साध्यम्। तदुभयवचनमनुमानालंकारः। यथा—**यत्रेति**।

---

दिरं राजयोग्यं गृहम्। (जरती जीर्णा। घनाभाः घनतुल्याः। घटाः श्रेणयः। कलम् मधुरस्वरम्।) दिवसैर्न तु मासैर्वर्षैर्वा।. (भूमिम्। अवस्थाम्। समारोपितः प्रापितः इत्याश्चर्यम्। शार्दूलविक्रीडितं छन्दः।) **हानम्**। स्वीयवस्तुसमर्पणम्। **उपादानम्**। परकीयवस्तुग्रहणम्। इति **पर्यायः**। **साधनमिति**। एतद्रूपत्रयविशिष्टो हेतुः साधनपदेनोच्यते इत्यर्थः। **व्यापकत्वाभिमतस्येति**। अस्य 'यस्य' इत्यादिः। **साध्यमिति**। अस्य 'तत्' इत्यादिः। **व्यापकसंबंधः**। व्यापकाऽस्तित्वम्। **तदुभयेति**। 'कविप्रतिभोल्लिखित' इत्यादिः। (**यत्रेति**।) चलाचलाः अतिचंचलाः। चलांचलेति पाठे चंचलप्रांतचक्षुष इत्यर्थः। व्यापारयन्ति वक्रीकुर्वन्ति। यत्र पुंसि। (मर्मस्पृशः मर्मभेदिनः। चक्रीकृतः कर्षणेन वर्तुलीकृतः चापो यस्मिन्कर्मणि तथा। अंचिते धनुषि योजिते शरे बाणे प्रेंखन् चलन् करः यस्य। शासनं आज्ञा तस्य धरः।).

१ ज. परां प्रापितः। २ च. झ. साध्यत्वम्

साध्यसाधनयोः पौर्वापर्यविकल्पे न किंचिद्वैचित्र्यमिति न तथा दर्शितम् ।

---

अत्र पूर्वार्धे साधनस्य उत्तरार्धे साध्यस्य वचनम् । प्रयोगश्चैवम्—एताश्चक्रीकृतचापं सदा पुरोधावदञ्चितशरत्वादिविशिष्टमनोभवाः संततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानत्वादिति । नन्वत्र पूर्वं साधनवत्साध्यस्यापि वचनं संभवति । यथा—'मधु तिष्ठति वाचि योषिताम्' इत्यादि । तत्कथं सामान्यत एतदुक्तं न तु विशेषत इति चेत्, साध्यस्य पूर्वभागे तादृशवैचित्र्या-

---

अग्रतः । पुरः । ( शार्दूलविक्रीडितं छन्दः । ) अत्र पूर्वार्धे संततनिपतन्मर्मभेदिबाणकलसद्भ्रूव्यापारकस्थानकत्वं साधनं पक्षवृत्तित्वेनोक्तम् । परार्धे साध्यम् । यत्तद्भ्यां व्याप्तिः सूचिता । तत्र वस्तुतो व्याप्त्यसत्त्वेऽपि कविप्रौढोक्त्या तथाभिधानम् । अत्राऽनुमानमित्यत्र भावे ल्युट् । तेन जायमानाऽनुमितिरत्रालंकारः । सा च मन्ये शंकेऽवैमि जाने इत्यादिवाचकोपादाने वाच्या । यत्र लिंगलिंगिनोः सत्त्वं तत्र तेषामनुमितिबोधकत्वात् । यत्र सादृश्यादिनिमित्तसद्भावस्तत्रोत्प्रेक्षाबोधकत्वम् । वक्ति कथयति इत्यादिलक्षणपदोपादाने लक्ष्या । उभयाऽनुपादाने साध्यसाधनाभ्यां तदाक्षेपे प्रतीयमानेति बोध्यम् । **नन्विति** । एवं चाऽनया रीत्याऽनुमानस्य द्वैविध्यं वक्तुमुचितमिति भावः। **मध्विति।** ' हृदि हालाहलमेव केवलम् । अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ' इति पादत्रयम् । **तादृशेति** । कार्यकारणयोर्वैपरीत्ये झटिति कार्यकारित्वप्रतीतिरूपवैचित्र्यवदिह तथाभावाभावात् न विशिष्योक्तमिति भावः । यत्तु केनचिदर्थेनोक्तेन तुल्यकारणत्वादर्थांतरस्यापादनमर्थापत्त्यलंकारः । यथा 'स जितस्त्वन्मुखेनेन्दुः का वार्ता सरसीरुहाम्' ' तवाग्रे यदि दारिद्र्यं स्थितं भूप द्विजन्मनाम् । शनैः सवितुरग्रेऽपि तमः स्थास्यत्यसंशयम् ॥ ' नेयं वाक्यवित्सम्मताऽर्थापत्तिः । आपादकस्यार्थस्योपतितमर्थं विनाऽनुपपत्तेरभावात् । अस्यां चार्थांतरं लोकेऽविद्यमानमपि कविना स्वप्रतिभया कल्पयित्वा यद्यापाद्यते तदाऽलंकारत्वम् । तेन ' उदुम्बरफलानीव ब्रह्माण्डान्यत्ति यः सदा । सर्वगर्वापहः कालस्तस्य के मशका वयम् ॥' इत्यादौ नायमलंकार इति। तन्न । आद्योदाहरणेऽनुमानस्य संभवात् । द्वितीये यद्यर्थाऽतिशयोक्तेः सत्त्वात् । सा च द्विविधा । आपाद्यापादकयोरुभयोरपि असंभवित्वेन कविकल्प्यतया आपाद्यमानस्यैवेत्यस्यापि सुवचत्वात् । ' निर्णेतुं शक्यमस्तीति मध्यं तव नितम्बिनि।

**विना प्रसिद्धमाधारमाधेयस्य व्यवस्थितिः ।**
**एकात्मा युगपद्वृत्तिरेकस्यानेकगोचरा ॥ ४९ ॥**
**अन्यत्प्रकुर्वतः कार्यमशक्यस्यान्यवस्तुनः ।**
**तथैव करणं चेति विशेषस्त्रिविधःस्मृतः ॥ ५० ॥**

प्रसिद्धाधारपरिहारेण यत् आधेयस्य विशिष्टा स्थितिरभिधीयते, स प्रथमो विशेषः । उदाहरणम्—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥१६८॥

एकमपि वस्तु यत् एकेनैव स्वभावेन युगपदनेकत्र वर्तते, स द्वितीयः । उदाहरणम्—

---

त्ययस्यानिरासात् तस्य वृत्तत्वात् । **विनेति ।**

स एष त्रिधा । तत्र प्रसिद्धमाधारं विनाऽधेयस्य विशिष्टावस्थितिर्यदभिधीयते स एको विशेषः । तत्र प्रसिद्धमित्यनेनेदमुक्तं यदत्र वास्तवमाधारत्वं न विवक्षितं किं तु कविप्रसिद्धिमात्रसिद्धमिति । अत एव तथैवोदाहरणम्— **दिवमपीति ।**

अत्र कविरूपं प्रसिद्धमाधारं विना गिरां विशिष्टावस्थितिरुक्ता । एकस्य वस्तुनो युगपद्या एकात्मा अनेकवृत्तिः स द्वितीयो विशेषः । एकात्मेत्येकेन स्वभावेनेत्यर्थः । एतच्च विशेषणं 'एकस्त्रिधा वससि—' इत्यादियथासंख्यव्यावर्तनाय । युगपदिति पर्यायनिवारणाय। उदाहरणम्—

---

नजन्यभेदज्ञानमुत्तरकालिकं न पूर्वोत्पन्नतदग्रहं निरसितुमुत्सहते। उत्पन्नत्वात्तस्येत्यर्थः । तत्फलीभूतगंडचंपकयोरत्यन्तसमानगुणत्वप्रत्ययस्यातिरस्कार इति तात्पर्यम् । एतेनेदृशे विषये विशेषालंकारः पृथगित्यपास्तम् ।[२]इति **सामान्यम् ।** ननु गिरामाकाश आधारः प्रसिद्धो न कविरत आह । **किं त्विति । सिद्धमिति ।** सिद्धमपीत्यर्थः । ( **दिवमिति ।** आकल्पं आप्रलयम् । ) गुणगणा गिरः । जगंति कर्म ( आर्या छन्दः । ) **विशिष्टावस्थितिः ।** निराधारेव । एवमाधारांतरगतत्वेनाधेयवर्णनेऽप्ययम् । यथा 'गतेऽपि सूर्ये दीपस्थास्त-

२ प्र. धो मतः

सा वसइ तुज्झ हिअए स च्चिअ अच्छीसु सा अ वअणेसु।
अह्मारिसाण सुन्दर ओआसो णत्थि पावाणम् ॥ १६९ ॥

यदपि किंचिद्रभसेन आरभमाणस्तेनैव यत्नेनाशक्यमपि कार्यान्तरमारभते, सोऽपरो विशेषः। उदाहरणम्—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम्।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च॥१७०॥

यथा वा—

गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम् ॥ १७१ ॥

सर्वत्र एवंविधविषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते, तां विना प्रायेणाऽलंकारत्वाऽयोगात्। अत एवोक्तम्—

---

**सा वसइ इति।**

स्पष्टम्। रभसेनान्यत्कार्यं कुर्वतः कर्तुर्यदशक्यस्यान्यस्यापि कार्यस्य तथैव करणं स तृतीयो विशेषः। अत्र तथैवेति तेनैव प्रकारेणेत्यर्थः। एतच्च 'धुनोति चासिं तनुते च कीर्तिम्' इत्यादिसमुच्चयव्यावर्तनाय। उदाहरणम्—**स्फुरदिति**।

अत्रान्यस्य करणं शाब्दम्। क्वचित्तु व्यङ्ग्यम्। यथा—**गृहिणीति**।

अत्र किं न मे हृतमिति सचिवादिसर्वहरणरूपकार्यकरणं व्यज्यते। नन्वाधारं विना वास्तवस्याधेयस्य व्यवस्थितिरनुपपन्नैव, एवमन्ययोरप्यनुपपत्तिरिति चेत्, न। अतिशयोक्तिमालम्ब्य तथाभिधानात्। सर्वत्रैवंविधे विषयेऽतिशयोक्तिरेव प्राणायिता। तां विना प्रायशोऽलंकारत्वाभावात्। अत एवाहुः—

---

मर्शिंच्छदंति तत्कराः' इति। (**सेति**।) 'सा वसति तव हृदये सैवाक्ष्णोः सैव वचनेषु। अस्माकं सुंदर अवकाशः कुत्र पापानाम् ॥' ( आर्या छन्दः। **स्फुरदिति**। स्फुरत् प्रकाशमानं अद्भुतं रूपं यस्य। उद्गतः प्रतापाग्निः यस्य। अनवद्या शुद्धा विद्या यस्य। एतादृशं त्वां सृजता ब्रह्मणा नवः मनोभूः मदनः, सविता, बृहस्पतिश्च ससृजे उत्पादितः इति सत्यम्। मालभारिणी छन्दः। **गृहिणीति**। रघुकाव्ये अष्टमसर्गे इंदुमतीं शोचतः अजराजस्योक्तिः। अपरवक्रं छन्दः।) **अतिशयोक्तिमिति**। अतिशयेनोक्तिमित्यर्थः। आधुनिको-

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते ।**
**यत्नोऽस्यां कविभिः कार्यः कोऽलंकारोऽनया विना ॥ इति ।**
**स्वमुत्सृज्य गुणं योगादत्युज्ज्वलगुणस्य यत् ।**
**वस्तु तद्‍गुणतामेति भण्यते स तु तद्‍गुणः ॥ ९१ ॥**

वस्तु तिरस्कृतनिजरूपं केनापि समीपगतेन प्रगुणतया स्वगुणसंपदोपरक्तं तत्प्रतिभासमेव यत्समासादयति, स तद्गुणः ( तस्याऽप्रकृतस्य गुणोऽत्रास्तीति ) ।

---

**सैषेति ।**

विभाव्यत इति । विशिष्टो भाव्यते । चमत्कारविशेषविषयः क्रियत इत्यर्थः । **स्वमिति ।**

अत्युत्कृष्टगुणस्याऽप्रस्तुतस्य योगात्तद्‍गुणसंपदुपरागात्स्वकीयं रूपं तिरस्कृत्य प्रस्तुतं वस्तु यत्तदनुकारमेवासादयति स तद्‍गुणो भण्यते । तस्याऽप्रस्तुतस्य गुणोऽत्रेति व्युत्पत्तेः । मीलिते वस्त्वन्तरेणाच्छादितस्य तस्यैव वस्तुनः प्रतीतिः, अत्र त्वनाच्छादितस्वरूपस्यैव वस्त्वन्तरगुणापत्तिरिति ततो भेदः ।

---

क्तेरपि कव्युक्तित्वोपचारेण हृदयादौ भावनादेव सत्वोपचारेण राज्ञस्ताद्रूप्येण मनोभूत्वाद्युपचारेण च तथोक्तिरिति भावः । न त्वतिशयोक्त्यलंकारोऽत्र विवक्षितः । तस्याऽत्राऽसंभवात् । **वक्रोक्तिः** । वक्रतया गौणतयोक्तिः । त्रिविध इत्युपलक्षणम् । दोषेऽपि गुणं दृष्ट्वा तदभ्यर्थनायामप्ययम् । 'विपदः सन्तु नः शश्वद्यासु संकीर्त्यते हरिः ।' एतेनाऽनुज्ञा नामाऽत्र पृथगलंकार इत्यपास्तम् । एवं गुणे दोषं दृष्ट्वा तदभ्यर्थनायामप्ययम् । एवं किंचित्सौकर्यं दृष्ट्वा दोषस्य गुणत्वकल्पनं, गुणस्य वा दोषत्वकल्पनमपि सः । यथा ' नैर्गुण्यमेव साधीयो धिगस्तु गुणगौरवम् । शाखिनोऽन्ये विराजन्ते खंड्यन्ते चन्दनद्रुमाः ॥' एतेनैतादृशविषये लेशनामा पृथगलंकार इत्यपास्तम् । एवं ' सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः । ' यथा—नाटकादौ, इत्युक्तमुद्रायास्त्वलंकारत्वमेव न । प्रकृतोपस्कारकत्वाऽभावात् । यत्तु ' क्रमिकं प्रकृतार्थानां न्यासं रत्नावली विदुः । चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥ ' इति । तन्न । रूपकेणैवात्र वर्ण्यस्योपस्कारो न तु क्रमकृतोऽपीति तस्यालंकारत्वाभावात् । **इति विशेषः** । **उत्सृज्येति** । व्याचष्टे । **तिरस्कृत्येति** । अभिभवे वस्तुतः स्वगुणत्यागाभावादिति भावः । **ततो भेद इति** । मीलिते धर्मिण एवाग्रहः, सामान्येऽप-

उदाहरणम्—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्याः परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥१७२॥

अत्र रवितुरगाऽपेक्षया गरुडाऽग्रजस्य, तदपेक्षया च हरिन्मणीनां प्रगुणवर्णता ।

**तद्रूपाऽननुहारश्चेदस्य तत्स्यादतद्गुणः ।**

यदि तु तदीयं वर्णं संभवन्त्यामपि योग्यतायाम् इदं न्यूनगुणं न गृह्णीयात्, तदा भवेदतद्गुणो नाम । उदाहरणम्—

---

उदाहरणम्—**विभिन्नेति** ।

अत्र तद्गुणद्वयम् । रवितुरगाऽपेक्षया गरुडाग्रजस्य तदपेक्षया च हरिन्मणीनां प्रकृष्टगुणत्वात्तद्रूपतया प्रतीतेः । एतेन यत्केनचिद्व्याख्यातम् 'स्वगुणत्यागाऽनन्तरं पुनस्तत्प्राप्तिस्तद्गुणः' इति, तदनादेयम् । तस्याऽप्रस्तुतस्य गुणोऽत्राऽस्तीति व्युत्पत्तिकथनप्रकाशविरोधात् । तत्र गुणद्वयकथनेन च तद्गुणद्वयव्युत्पादनात् । 'आत्ते सीमन्तरत्ने-' इत्यादौ वक्ष्यमाणे संकरोदाहरणे तद्गुणत्वाभावप्रसंगाच्च । न हि तत्र त्यक्तस्य स्वकीयरूपस्याऽवाप्तिः । **तद्रूपेति** ।

तदिति प्रकृतेत्यर्थः । अस्याप्रस्तुतस्य । अत्युज्ज्वलगुणयोगेऽपि यदि न्यूनगुणोऽप्रकृतः प्रकृतस्य गुणं नानुहरति तदा अतद्गुणः । उदाहरणम्—

---

रित्यक्तगुणस्यैव अपृथक्प्रतिभासः, इह तु गुणमात्रस्यैवाभिभवः धर्मिणः पृथक् भासश्चेति भेद इत्यर्थः । भ्रान्तिमति स्मर्यमाणस्यारोपोऽत्र गृह्यमाणस्येति भेदः । भ्रान्तेर्निबद्धत्वाभावाच्च । **विभिन्नेति** । (माघकाव्ये चतुर्थसर्गे रैवतकपर्वतवर्णनम् । गरुडाग्रजेन अरुणेन विभिन्नवर्णाः । रथ्याः अश्वाः । ) स्फुरंत्या रुचा इति सर्वान्वयि । वंशकरीरं कोमलवंशाग्रभागः । (उपजातिश्छन्दः ।) अत्र द्वितीयं तद्गुणं पूर्वरूपमिति व्यवहरन्ति केचित् । 'पद्मरागायते नासामौक्तिकं तेऽधरत्विषा' इत्यप्युदाहरणम् । एवं परसन्निधानेन प्राक्सिद्धस्वगुणोत्कर्षोऽपि तद्गुणविशेष एवेत्यपि बोध्यम् । यथा 'नीलोत्पलानि दधते कटाक्षैरतिनीलताम्' इति । एतेनात्राऽनुगुणनामा पृथगलंकार इत्यपास्तम् । **इति तद्गुणः । अत्युज्ज्वलगुणयोगेऽपीति ।** पूर्ववाक्यस्थयोगादित्यस्यानुषंगा-

धवलोऽसि जहवि सुन्दर तहवि तुए मज्झ रञ्जिअं हिअअम्।
राअभरिए वि हिअए सुअह णिहित्तो ण रत्तोऽसि ॥ १७३ ॥

अत्राऽतिरक्तेनाऽपि मनसा संयुक्तो न रक्ततामुपगत इत्यतद्गुणः। किं च तदिति अप्रकृतं अस्येति च प्रकृतमत्र निर्दिश्यते । तेन यत् अप्रकृतस्य रूपं प्रकृतेन कुतोऽपि निमित्तात् नाऽनुविधीयते, सोऽतद्गुण इत्यपि प्रतिपत्तव्यम्। यथा—

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चाऽपचीयते ॥ १७४॥

**यद्यथा साधितं केनाऽप्यपरेण तदन्यथा ॥ ८२ ॥**
**तथैव यद्विधीयेत स व्याघात इति स्मृतः ।**

येनोपायेन यत् एकेनोपकल्पितम्, तस्याऽन्येन जिगीषुतया तदु-

---

**धवलोऽसीति** ।

अत्राऽतिरक्ते मनसि धृतस्याऽप्यरक्तत्ववचनादुत्तरार्धमेवोदाहरणम् । तत्र प्रकृतं हृदयम्, संबोध्यस्त्वप्रकृतः । स्वहृदयवृत्तान्तनिवेदनस्यैव विवक्षितत्वात् । किं[1] चाऽत्र सूत्रे तत्पदेन प्रकृतमिवाऽप्रकृतमप्युच्यते। तथाऽस्येत्यनेनाऽप्रकृतमिव प्रकृतमप्युपस्थाप्यते । सामान्यमुखप्रवृत्तत्वात् । तथा चाऽप्रस्तुतेन प्रस्तुतरूपाऽननुहरणवत्प्रस्तुतेनाऽप्रस्तुतरूपाऽननुहारोऽन्यः प्रकारः । यथा—

**गांगमिति** ।

अत्राऽन्यापदेशपक्षे राजहंसस्याऽप्राकरणिकत्वं प्राकरणिकसत्पुरुषोपमानतयोपपादनीयम् । वाच्यमात्रविश्रान्तौ तु न काचिदनुपपत्तिः । **यद्यथेति** ।

यथा येनोपायेन तथा तेनोपायेनेत्यर्थः । तथा च केनाऽपि कर्त्रा यद्वस्तु

---

दिदं लब्धम् । ( **धवलोऽसीति** । ) 'धवलोऽसि यद्यपि सुंदर तथापि त्वया मम रंजितं हृदयम् । रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥' निहित इत्यनेन रंजनयोग्यता । ( गाथा छन्दः । **गांगमिति** । यामुनं यमुनासंबंधि । अंबु जलम् । चीयते वर्धते। अपचीयते अपक्षीयते । रथोद्धता छन्दः। ) **न काचिदनुपपत्तिरिति** । गंगायमुनयोरप्रकृतयोर्गुणस्य वर्ण्यतया प्रकृतेन राजहंसेनाग्रहणादिति भावः। अमुं विशेषोक्तावंतर्भावयंति परे । **इत्यतद्गुणः**।

---

१ ठ. मु. पृ. एव चात्र ।

**पायकमेव यत् अन्यथाकरणम्, स (साधितवस्तुव्याहतिहेतुत्वात्) व्याघातः। उदाहरणम्—**

**दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।**
**विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः॥ १७५॥**

---

येनोपायेन यथा साधितं तदन्येन कर्त्रा जिगीषुतया तद्वस्तु तेनैवोपायेन ततोऽन्यथा चेत्साध्यते स व्याघात इत्यर्थः। प्रथमसाधितस्य वस्तुनो व्याहतिहेतुत्वात्। उदाहरणम्—**दृशेति**।

अत्र दृशैव दाहो जीवनं च।

---

**तेनैवोपायेनेति**। तज्जातीयेनैवेत्यर्थः। (**दृशेति**। विद्धशालभंजिकायां प्रथमांके मंगलाचरणम्। विरूपाक्षः शिवः।) **अत्र दृशेति**। तथा च कार्यवैजात्ये कारणवैजात्यं प्रयोजकमित्यस्य व्याघात इति भावः। इदमुपलक्षणम्। अन्यकारणत्वेन प्रसिद्धात्तदन्यकार्यनिष्पादनेऽप्ययम्। 'यैर्जगत्प्रीयते हन्ति तैरेव कुसुमायुधः' इत्यत्र योगार्थसत्त्वात्। अत्र सर्वत्र कारणयोरेकत्वाध्यवसानात्पुरस्फुरन्विरोधः प्रातिस्विकरूपेण तत्तत्कार्यहेतुताविमर्शनान्निवर्त्तते इति बोध्यम्। यदा त्वाश्रयभेदेनैकस्यैव कारणस्य विरुद्धकार्यद्वयजनकत्वं निबध्यते तत्र नायम्। व्याहतेर्विरोधगर्भाया अभावात्। यथा एकस्यैव पाण्डित्यस्य खलवृत्तिमदजनकत्वं सुजनवृत्तिशान्तिजनकत्वं च। एवमेकेन कर्त्रा येन कारणेन यत्कार्यं निष्पिपादयिषितं तदन्येन कर्त्रा तेनैव कारणेन तद्विरुद्धकार्यं निष्पिपादयिषितं चेत्तदाऽप्ययम्। यथा 'विमुञ्चसि यदि प्रियां प्रियतमेति मां मन्दिरे तदा सह नयस्व मां प्रणययंत्रणायंत्रितः। अथ प्रकृतिभीरुरित्यखिलभीतिरक्षाक्षमान्न जातु भुजमंडलादवहितो बहिर्भावय॥' इति। वनं प्रति प्रस्थितं रामं प्रति जानक्या वाक्यमिदम्। यत्तु 'निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम्। ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान्॥' इति निरुक्त्यलंकारः। स श्लेषविशेष एव। यदपि सिद्धस्यैव विधानं विध्यलंकारः। 'पंचमोदंचने काले कोकिलः कोकिलोऽभवत्।' अत्र द्वितीयकोकिलपदं मधुरध्वनिशालित्वं लक्षयत् सकलजनहृद्यत्वं व्यनक्ति। तदपि ध्वनिना गतार्थम्। क्वचिद्गुणीभूतव्यंग्येन वा। न हि सर्वोऽपि गुणीभूतव्यंग्यप्रपंचोऽलंकारगोष्पदेऽन्तर्भावयितुं शक्यते वेधसाऽपि। एवं सिद्धनिषेधानुकीर्त्तनमपि। एवमष्टौ प्रमाणालंकाराः अन्यैर्दर्शिताः। तत्र प्रत्यक्षं भाविकतया निबद्धम्। अन्यादृशं तु न चमत्कारि।

**सेष्टा संसृष्टिरेतेषां भेदेन यदिह स्थितिः ॥ ९३ ॥**

**एतेषां समनन्तरमेवोक्तस्वरूपाणामलंकाराणां यथासंभवमन्योन्यनिरपेक्षतया यत् ऐकत्र (शब्दभागे एव, अर्थविषये एव, उभयत्राऽपि वा) अवस्थानम्, सा एकार्थसमवायस्वभावा**

एवं शुद्धालंकारा दर्शिताः। अस्ति पुनः कश्चिद्विषयो यत्राऽङ्गदादिसंबद्धपद्मरागप्रमुखमणिमेलकवत्प्रोक्तानामलंकाराणां संवलन एव चमत्कारः। तस्मात्सोऽप्यलंकारः। तत्र द्वयी गतिः। परस्परमनपेक्ष्य व्यवस्थितेस्तदभावाच्च। तत्र प्रथमा संसृष्टिरुच्यते, द्वितीया तु संकरः। स च त्रिधेति प्रकारचतुष्टयं लक्षयति—**सेष्टेति**।

भेदः स्वरूपतो विषयतो वा परस्परमनपेक्षत्वम्। यद्वा विषयभेदे सति परस्पराऽनपेक्षत्वम्। स्थितिर्व्यवस्थितिः। एतेषां समनन्तरमेवोक्तानामलंकाराणां भेदेन यत्स्थितिः सा संसृष्टिरिष्टा। संकरभेदास्तु नैवम्। अङ्गाऽङ्गिभावे स्वरूपतः सापेक्षत्वात्। अनिश्चये व्यवस्थितेरेवाऽभावात्। व्यवस्थिते विषयतः पराऽपे-

---

अनुमानं तु साक्षादेवोक्तम्। अन्येषां तु नालंकारत्वम्। तत्तत्प्रमाणजन्यप्रमितिविषयत्वकृतचमत्काराभावात्। तत्तद्रूपेणोपस्कारकत्वाभावात्। उपमानं तु उपमयैव गतार्थमित्याद्यूह्यम्। **चमत्कारः।** अधिकश्चमत्कारः। ननु संसृष्टिर्न पृथक्, यथा कामिनीशरीरे कुंडलहारकेयूरकंकणादीनां खलेकपोतिकया शोभाजनने न विशेषार्थः। समुदायिभ्यः समुदायस्य भेदाभावात्। अन्यथा लोकेऽपि भेदापत्तिः। तद्दृष्टयैव काव्ये गुणालंकारकल्पनादिति चेन्न। तत्र स्वाश्रयभिन्नभिन्नांऽगोत्कर्षाधानपूर्वकं शरीरेऽवयविनि आर्थः शोभातिशयः, इह त्वेकांगोत्कर्षतया संसृष्टिरेव। यथा लिपतीत्यादौ उत्प्रेक्षया तमसः प्रसृतत्वं प्रतिपाद्योपमयाऽतिगाढत्वोपपादनेन संसृष्टिव्यवहारात्। लोकेऽपि बहूनां कंठाभरणानामेकोत्कर्षकत्वं तत्र संसृष्टित्वस्यैवांगीकारात्। **परस्परमपेक्ष्येति।** परस्परनैरपेक्ष्येण लब्धात्मविश्रांतीनामित्यर्थः। **एतेषामिति।** बहुत्वमविवक्षितम्। तेन द्वयोरपि संग्रहः। **भेदेनेति।** अनेन संकरव्युदासः। व्यवस्थित्यभावमुपपादयति। **व्यवस्थितेरिति।** यथा लिपतीत्यत्रोत्प्रेक्षा लेपनविषया।

---

१ प्र. सैषा इति वा पाठः। २ छ. ज. इह।

तत्र शब्दाऽलंकारसंसृष्टिर्यथा—

वदनसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशाऽन्यया ॥ १७६ ॥

अर्थाऽलंकारसंसृष्टिस्तु—

लिम्पतीव तमोऽङ्गानि वर्षतीवाऽञ्जनं नभः ।
असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥ १७७ ॥

पूर्वत्र परस्परनिरपेक्षौ यमकाऽनुप्रासौ संसृष्टिं प्रयोजयतः । उत्तरत्र तु तथाविधे उपमोत्प्रेक्षे । शब्दाऽर्थाऽलंकारयोस्तु संसृष्टिः—

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णम् ।
तरुणाण हिअअलूडिं परिसप्पन्तिं णिवारेइ ॥ १७८ ॥

अत्राऽनुप्रासो रूपकं चाऽन्योन्यानपेक्षे । संसर्गश्च तयोरेकत्र वाक्ये

---

क्षत्वाद्विषयाऽभेदाच्च । सेयं शब्दाऽलंकारमात्रस्याऽर्थालंकारमात्रस्य शब्दाऽलंकारयोर्वेति त्रिप्रकारा । तत्राद्या यथा—**वदनेति** ।

अत्राऽनुप्रासयमकयोः परस्परमनपेक्ष्य व्यवस्थितिः । द्वितीया यथा—**लिम्पतीति** ।

अत्रोत्प्रेक्षोपमे परस्परमनपेक्ष्य व्यवस्थिते संसृष्टिं प्रयोजयतः । अन्त्या यथा—**सो णत्थीति** ।

अत्राऽनुप्रासरूपके शब्दाऽर्थालंकारौ । नन्वनयोः शब्दार्थरूपाश्रयभेदेन क-

उपमा असत्पुरुषसेवाविषया । **विषयाभेदादिति** । अनिश्चयेतिशेषः । **वदनेति** । (माघकाव्ये षष्ठसर्गे कस्याश्चिन्नायिकाया वर्णनम् ।) मुखसौगंध्यंलोभेन भ्रमतां भृंगाणां यः संभ्रमो भ्रमणं तेन पूर्णशोभया चूर्णकुंतलैश्चंचलदृशा मधुरो मेखलाशब्दो विदध इत्यर्थः । ( द्रुतविलंबितं वृत्तम् ।) **लिंपतीवेति** । पूर्वार्द्धे उत्प्रेक्षा उत्तरार्धे उपमा । (**सो णत्थीति** ।) 'स नास्त्यत्र ग्रामे य एनां महमहल्लावण्याम् । तरुणानां हृदयलुंठाकीं परिष्वक्कर्तीं निवारयति ॥' महमहत् लावण्याम् नवनवीभवल्लावण्याम् । परिष्वक्कंतीम् स्वानुरूपरमणाभावादितस्ततो गच्छंतीम् । ( गाथा छन्दः । ) अत्र पूवार्धे छेकानुप्रासः । उ-

छन्दसि वा समवेतत्वात् ।

**अविश्रान्तिजुषामात्मन्यङ्गाङ्गित्वं तु संकरः ।**

एते एव यदात्मनि अनासादितस्वतन्त्रभावाः परस्परम् अनुग्राह्याऽनुग्राहकतां दधति, स ( एषां संकीर्यमाणस्वरूपत्वात् ) संकरः । उदाहरणम्—

आत्ते सीमन्तरत्ने मरकतिनि हृते हेमताटङ्कपत्रे
लुप्तायां मेखलायां झटिति मणितुलाकोटियुग्मे गृहीते ।
शोणं बिम्बोष्ठकान्त्या त्वदरिमृगदृशामित्वरीणामरण्ये
राजन्गुञ्जाफलानां स्रज इति शबरा नैव हारं हरन्ति ॥१७९॥

अत्र तद्गुणमपेक्ष्य भ्रान्तिमता प्रादुर्भूतम्, तदाश्रयेण च तद्गुणः स-

---

थमेकार्थसमवायलक्षणा संसृष्टिरिति चेत्, एकवाक्ये छन्दसि वा समवेतत्वात् ।

**अविश्रान्तीति ।**

तेषामेवाऽलंकाराणां चारुत्वार्थं स्वरूपनिष्पत्तये वाऽन्यापेक्षणादात्मन्यनासादितस्वन्तत्रभावानां परस्परमनुग्राह्याऽनुग्राहकत्वं स तु संकरः । संकीर्यमाणस्वरूपत्वात् । उदाहरणम्—**आत्ते इति ।**

अत्र बिम्बौष्ठकान्त्या शोणमिति तद्गुणमपेक्ष्य गुञ्जाफलानां स्रज इति भ्रान्तिमानात्मानं लभते । तद्गुणोऽप्यत्र न स्वातन्त्र्येण चमत्कारविशेषं करोति

---

त्तरार्धे हृदयलुंठाकीमिति रूपकम् । **एकवाक्येति** । 'क्रिया वा कारकान्विता' इति उक्तेरर्थावच्छिन्नशब्दस्यैव वाक्यत्वम् ।`तथा चैकं वाक्यमिति प्रतीतिसिद्धमेकत्वमादाय तयोरेकार्थसमवाय इत्यर्थः । वाक्यभेदेऽप्याह । **छंदसि वेति** । चतुःपादात्मके इत्यर्थः । अर्थालंकाराणामप्यत्र परंपरया स्थितिः । **समवेतत्वम्** । संबद्धत्वम् । **आत्मनि** । आत्ममात्रे । **परस्परमिति** । कस्यचिदनुग्राह्यत्वं कस्यचिदनुग्राहकत्वमित्यर्थः। योगार्थमाह । **संकीर्यमाणेति ।** ( **आत्ते इति** ।) आत्ते गृहीते सीमंतरत्ने, प्रथमं तत्र दृष्टिपातात् । मरकतिनीत्यनेन झटिति विवेचनम् । शुद्धहेम्नां देहकान्त्याऽभिभवसंभवात् । ताटंकपत्रं कर्णालंकारः । लुप्तायां छिन्नायाम् । मणितुलाकोटियुग्मे नूपुरे । इत्वरीणां गतिशीलानाम् । बिम्बौष्ठकान्त्येति । मुखस्य नम्रत्वात् । हारं मुक्तानिर्मितम् । ( स्रग्धरा छन्दः ।) **आत्मानं लभते इति ।** अधरसान्निध्यासादितारुण्यविशिष्टमुक्ताफलानां दर्शनेन गुंजास्मरणात्भ्रान्तिर्भवतीति भावः ।

चेतसां प्रभूतचमत्कृतिनिमित्तमित्यनयोरङ्गाङ्गिभावः। यथा वा—

जटाभाभिर्भाभिः करधृतकलङ्काऽक्षवलयो
वियोगिव्यापत्तेरिव कलितवैराग्यविशदः।
परिप्रेङ्खत्तारापरिकरकपालाऽङ्कितत
शशी भस्मापाण्डुः पितृवन इव व्योम्नि चरति॥ १८०॥

उपमा रूपकम् उत्प्रेक्षा श्लेषश्चेति चत्वारोऽत्र पूर्ववत् अङ्गाऽङ्गितया प्रतीयन्ते। कलङ्क एवाऽक्षवलयमिति रूपकपरिग्रहे करधृतत्वमेव साधकप्रमाणतां प्रतिपद्यते। अस्य हि रूपकत्वे तिरोहितकलङ्करूपम् अक्षवलयमेव मुख्यतयाऽवगम्यते। तस्यैव च करग्रहणयोग्यतायां सा-

---

किं तु भ्रान्तिमदपेक्षयैवेति परस्परमनुग्राह्याऽनुग्राहकभावः। अत्र द्वयोरलंकारयोः संकरः। बहूनामपि यथा—**जटेति**।

अत्र जटाभाभिर्भाभिरिति पितृवन इव व्योम्नीति चोपमा। कलङ्काऽक्षवलयेति तारापरिकरकपालेति च रूपकम्। वियोगिव्यापत्तेरित्युत्प्रेक्षा। वैराग्यविशद इति श्लेषः। चत्वारोऽप्येते परस्परमङ्गाङ्गिभावेन प्रतीयन्ते। तत्रोत्प्रेक्षा श्लेषाऽङ्गम्। तद्वशादेव वैराग्यविशद इत्यत्र द्वितीयार्थाऽनुसंधानात्। श्लेषश्च रूपकोपमयोरङ्गम्। तद्वशादवगतनिर्वेदमहिम्नैव जटाया अक्षवलयधारणस्य च संगतेः। तारापरिकरकपालेति रूपकं पितृवन इवेत्युपमाया अङ्गम्। तद्बीजं हि सादृश्यम्। न च श्मशाने व्योम्ना सह तत्साहजिकं किं तु रूपितकपालाश्रयत्वेनैवेति। सर्वत्र चाऽङ्गानां चारुत्वार्थमङ्ग्यपेक्षा पूर्ववदूहनीया। सर्वेषां चैषां पार्यन्तिकचारुत्वहेतुरङ्गिभूता च समासोक्तिः। चंद्रगतत्वेन महाव्रतिवृत्तान्तप्रतीतेः। सा च व्यक्त्यैवेति प्रकाशकृता नोक्तेत्यवधेयम्। ननु कलंकाऽक्षव-

---

**भ्रान्तिमदपेक्षयेति**। तन्निर्वाहकत्वेनेति भावः। एतच्च प्रकृताभिप्रायेण। अन्यत्र तस्य स्वातंत्र्येणापि चमत्कारित्वात्। **जटेति**। जटातुल्याभिः पिंगाभिः कान्तिभिरुपलक्षितः। करो हस्तः किरणश्च तेन धृतः कलंक एव वलयाकाररुद्राक्षमाला येन। विरहिपीडयेवांगीकृतं यद्वैराग्यं विगतरक्तता विषयव्यावृतिश्च। वियोक्तुं शीलं येषां ते वियोगिनो विषयास्तेषां व्यापत्तिर्नाशश्च। विशदः पांडुरः शुद्धचित्तश्च। उदयकालिकलौहित्यत्यागात्तथात्वम्। प्रेंखत्तारासमूहरूपकपालविहितस्वरूपे। भस्मना पांडुर्भस्मेव पांडुश्च। पितृवनं श्मशानम्। ( शिखरिणी छन्दः। ) **वृत्तान्तप्रतीतेरिति**। तद्वृत्तांताध्यारोपे

**र्वत्रिकी प्रसिद्धिः । श्लेषच्छायया तु कलङ्कस्य करधारणम् असदेव प्रत्यासत्त्या उपचर्यं योज्यते । शशांङ्किन केवलं कलङ्कस्य मूर्त्यैव उद्वहनात् । कलङ्कोऽक्षवलयमिवेति तु उपमायां कलङ्कस्य उत्कटतया प्रतिपत्तिः । न चास्य करधृतत्वं तत्त्वतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् । एवंरूपश्च संकरः शब्दालंकारयोरपि परिदृश्यते । यथा—**

---

लयेति कथमेकान्ततो रूपकमुच्यते । उपमाया अपि संभवेन संदेहसंकरौचित्यादिति चेत्, न। रूपकपरिग्रहे करधृतत्वमेव साधकं प्रमाणमतः संदेहस्याऽभावात्कथमस्य साधकत्वमिति चेत्, इत्थम्—करधृतत्वरूपविशेषणस्याऽक्षवलय एव सार्वत्रिकी प्रसिद्धिः, न तु कलङ्के। अतः प्राधान्येनाऽक्षवलयप्रतीतिरेवोद्देश्या। सा च रूपकपरिग्रहेणैव संभवति । तत्र तिरोहितकलङ्करूपमक्षवलयत्वमेव मुख्यतयाऽवगम्यते । नन्वेवमपि विशेषणमिदमसम्यगेव । चन्द्रपक्षे किरणेन कलङ्कधारणस्याऽभावात् मूर्त्यैव तेन तद्धारणादिति चेत्, न । श्लेषच्छायया हि कलङ्कस्याऽप्रधानस्य करधारणमसदेव प्रत्यासन्नतयोपचर्यं योज्यते। तथा सत्युपमापरिग्रहे को दोष इति चेत्, कलङ्कोऽक्षवलयमिवेत्युपमायां कलङ्कस्य प्रधानत्वेन प्रतीतिः । न चास्य करधृतत्वं मुख्यतोऽस्तीति मुख्येऽप्युपचार एव शरणं स्यात् । मुख्यविषयोपचाराऽपेक्षया चाऽमुख्योपचार एव श्रेयानिति रूपकमेवाश्रीयते । शब्दाऽलंकारयोरप्येष संकरो दृश्यत इति प्राञ्चः । उदाहरन्ति च—

---

एव धृतकलंकाक्षवलयत्वान्वयादिति भावः । शशिवर्णनस्यैव प्रकृतत्वादत्रैव विश्रांतिः । **प्राधान्येनेति** । कलंकत्वाच्छादनेनेत्यर्थः । **मुख्यतयेति** । रूपके वलयताद्रूप्यस्योद्भूततया प्रतीतेरिति भावः । **श्लेषच्छाययेति** । करपदश्लेषेण किरणे पाण्यभेदाध्यवसायादित्यर्थः । उपचर्यं प्रत्यासन्नतया इत्यन्वयः। साहश्यसंबंधमूलकलक्षणापूर्वकमक्षवलयतादात्म्यप्राप्त्या । **तथा सति** । उपमायामप्यसदेव करधृतत्वमुपचर्यतामिति भावः । **प्रधानत्वेनेति** । इतरस्वरूपानाच्छादित्वे सति विशेष्यतयेत्यर्थः । **मुख्येति** । विशेष्यभूतेत्यर्थः । **अमुख्यम्** । विशेषणम् । उपमा पूर्वपदार्थप्रधाना रूपकमुत्तरपदार्थप्रधानमिति भावः ।

---

1 मु. पु. तत्व ।

राजति तटीयमभिहत-दानव-
रासाऽतिपाति-साराव-नदा ।
गजता च यूथमविरत-दान-वरा
साऽतिपाति सारा वनदा ॥ १८१ ॥

अत्र यमकमनुलोमप्रतिलोमश्च चित्रभेदः पादद्वयगते परस्परापेक्षे
एकस्य च ग्रहे न्यायदोषाऽभावादनिश्चयः ॥ ९४

**राजतीति ।**

तत्र यद्यपि यमकाऽनुलोमविलोमचित्रभेदयोर्न स्फुटं परस्पराऽपेक्षित्वं, तथापि यमकनिर्वाहप्रवृत्तस्य कवेरपृथक्प्रयत्ननिर्वृत्ततयाऽनुलोमविलोमस्योत्पत्तौ यमकापेक्षा, यमकस्य तु चारुताऽतिशये तदपेक्षता । तदाश्रयेणाऽतिसुन्दरतयाऽतिशयेन विदग्धमनोऽनुरञ्जकत्वादिति तेषामाशयः । वस्तुतस्तु यमकनिर्वाह एव कविप्रवृत्तिरिति निश्चायकं नास्ति । अस्तु वा तथा । तथापि यमकं न चित्रहेतुः । किं तु तत्प्रयत्नः । तस्मादेकाश्रयाऽनुप्रवेशेनैवाऽयं संकरो न त्वनुग्राह्यानुग्राहकतयेत्येव युक्तम् । **एकस्य चेति ।**

---

वस्तुतस्तु रूपके अक्षवलयतादात्म्यापन्ने कलंके पाण्यभिन्नत्वेनाध्यवसितकिरणधृतत्वान्वययोग्यताऽस्ति उपमायां तु तत्सदृशत्वेन प्रतीतिविषये कलंकत्वविशिष्टे पाण्यभिन्नत्वेनाध्यवसितेनापि किरणेन धृतत्वान्वययोग्यता नास्तीति रूपकमेवात्र । एवं च रूपके पूर्वपदार्थप्राधान्येऽपि न दोष इत्यवधेयम् । **राजतीति ।** ( हरविजयकाव्ये पंचमसर्गे पर्वतवर्णनम् । ) इयं तटी राजति । कीदृशी । अभिहतो दानवानां रासः क्रीडा शब्दो वा यस्यां सा । अतिपाती शीघ्रगामी सारावः सशब्दो नदो यस्यां सा । गजता गजयूथं अतिशयेन पाति रक्षति । किंभूता । अविरतेन दानेन मदेन वरा श्रेष्ठा । सारा स्थिरा । वनदा वनखंडिका । ( आर्यागीतिश्छन्दः । ) **चित्रभेदः** । चित्रनामालंकारः । स चात्रानुलोमप्रतिलोमरूपः । **तेषामाशय इति** । एवं चानुग्राह्यानुग्राहकसंकर इति भावः । एतेन शब्दालंकारयोरयं नास्ति शब्दस्वरूपतयोपकार्योपकारकत्वाभावात्, किंतु संसृष्टिरेवेत्यलंकारसर्वस्वोक्तमपास्तम् । **तस्मादेकेति** । मिथश्चारुतातिशये परस्परापेक्षत्वादनुग्राह्यानुग्राहकभावोऽपीत्यन्ये । **एकस्य** । एकतरस्य ।

---

१ ठ. मु. पु. दुष्कर° ।

द्वयोर्बहूनां वा अलंकाराणामेकत्र समावेशेऽपि विरोधात् न यत्र युगपदवस्थानम्, न चैकतरस्य परिग्रहे साधकम्, तदितरस्य वा परिहारे बाधकमस्ति, येनैकतर एव परिगृह्येत, स निश्चयाऽभावरूपो द्वितीयः संकरः। समुच्चयेन संकरस्यैवाक्षेपात्। उदाहरणम्—

जह गहिरो जह रअणणिब्भरो जह अ णिम्मलच्छाओ।

ता किं विहिणा एसो सुरसवाणीओ जलणिही ण किओ ॥१८२॥

अत्र समुद्रे प्रस्तुते ( विशेषणसाम्यादप्रस्तुतार्थप्रतीतेः ) किमसौ समासोक्तिः, किं ( अब्धेरप्रस्तुतस्य मुखेन कस्यापि तत्समगुणतया प्रस्तुतस्य प्रतीतेः ) इयमप्रस्तुतप्रशंसा इति संदेहः। यथा वा—

नयनानन्ददायीन्दोर्बिम्बमेतत्प्रसीदति।

अधुनाऽपि निरुद्धाशमविशीर्णमिदं तमः ॥ १८३ ॥

अत्र किं ( कामस्योद्दीपकः कालो वर्तते इति भङ्ग्यन्तरेणाऽभिधा-

---

न्यायः साधकप्रमाणसत्ता। दोषः प्रतिकूलसत्ता। ग्रहो व्यवस्थितिः। यत्र द्वयोर्बहूनां वाऽलंकाराणामेकत्र योग्यत्वेऽपि विरोधान्नैकदा व्यवस्थितिः, न चैकतरपरिग्रहे साधकं तदितरपरिग्रहे बाधकं येन तदेव व्यवतिष्ठेत, सोऽप्यनिश्चयरूपो द्वितीयः संकरः। सूत्रस्थचकारेण संकरस्यैवाक्षेपात्। उदाहरणम्—**जहेति**।

अत्र किं समुद्रे प्रस्तुते श्लिष्टविशेषणमहिम्नाऽप्रस्तुतपुरुषविशेषप्रतीतेरियं समासोक्तिः, किं वाऽब्धेरप्रस्तुतात्प्रस्तुतस्य पुरुषविशेषस्य तत्समानगुणतया प्रतिपत्तेरप्रस्तुतप्रशंसेति संदेहः। एकस्यैकदा प्रस्तुताप्रस्तुतोभयरूपत्वाभावादनयोर्युगपदसंभवात्, न्यायदोषयोरसंभवाच्च। अयं द्वयोः संकरः। बहूनां यथा—**नयनेति**।

अत्र किं कामोद्दीपकः कालो वर्तत इति भङ्ग्यन्तरेणाऽभिधानात्पर्यायोक्तम्।

---

**प्रतिकूलसत्ता**। बाधकप्रमाणसत्ता। **व्यवस्थितिः**। निश्चयः। **विरोधात्**। विरुद्धतात्पर्यकत्वात्। ( **जहेति**। ) 'यथा गंभीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः। तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥' (आर्या मुखविपुला।) संदेहबीजमाह। **न्यायदोषयोरिति**। ( **नयनेति**। ) निरुद्धाशं निरुद्धदिक् निरुद्धप्रत्याशं च। अविशीर्णं न नष्टम्। तमस्तिमिरं

नात्) पर्यायोक्तम्, उत (वदनस्येन्दुबिम्बतया अध्यवसानात्) अतिशयोक्तिः, किं वा (एतदिति वक्त्रं निर्दिश्य तद्रूपारोपवशात्) रूपकम्, अथवा (तयोः समुच्चयविवक्षायां) दीपकम्, अथवा तुल्ययोगिता, किमु (प्रदोषसमये विशेषणसाम्यादाननस्याऽवगतौ) समासोक्तिः, आहोस्वित् (मुखनैर्मल्यप्रस्तावात्) अप्रस्तुतप्रशंसा इति बहूनां संदेहादयमेव संकरः।

यत्र तु न्यायदोषयोरन्यतरस्याऽवतारः, तत्र एकतरस्य निश्चयात् न संशयः। न्यायश्च साधकत्वम् (अनुकूलता)। दोषोऽपि बाधकत्वं (प्रतिकूलता)। तत्र

'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।'

इत्यत्र मुख्यतया अवगम्यमाना हासद्युतिर्वक्त्रे एवानुकूल्यं भजते इत्युपमायाः साधकम्, शशिनि तु न तथा प्रतिकूलेति रूपकं प्रति तस्या अबाधकता।

---

कि वा एतदित्यस्य बिम्बपरामर्शकतया वदनस्येन्दुबिम्बेनाध्यवसानादतिशयोक्तिः। कि वा एतदिति वक्त्रं निर्दिश्येन्दुबिम्बरूपणवशाद्रूपकम्। अथ प्रसीदतीत्यस्योभयत्रान्वयविवक्षायामेकतरस्य प्रकृतत्वाद्दीपकम्। द्वयोरपि प्रकृतत्वेऽप्रकृतत्वे वा तुल्ययोगिता वा। कि वा प्रदोषवर्णने चन्द्रबिम्बस्य प्रकृतत्वे विशेषणसाम्यादाननप्रतीतौ समासोक्तिः। आहोस्विन्मुखनैर्मल्यवर्णनप्रस्तावाच्चन्द्रस्याऽप्रस्तुतत्वेनाऽप्रस्तुतप्रशंसेति संदेह। न्यायदोषयोरभावात्। यत्र तु तयोरन्यतरस्याऽवतारस्तत्रैकतरनिश्चयान्न संशयस्तत्र 'सौभाग्यं वितनोति वक्त्रशशिनो ज्योत्स्नेव हासद्युतिः।' इत्यत्र मुख्यत्वेन प्रतीयमानाऽहसितद्युतिर्वक्त्र एवानुकूल्यं भजते। तत्रैव मुख्यतस्तत्संभवात्। वक्त्रस्य प्राधान्येन स्थितिरुपमायामेवेत्युपमासाधिका। शशिनि तु नानुकूला। मुख्यतस्तत्र हासद्युतेरभावात्।

---

मोहश्च। **अतिशयोक्तिः**। निगीर्याऽध्यवसानरूपा। **रूपकमिति**। निगरणाऽभावादित्यर्थः। **दीपकमिति**। चद्रंबिबं प्रसीदति एतन्मुखं च प्रसीदतीत्यन्वयादिति भावः। **तुल्ययोगितेति**। द्वयोरौपम्यस्याक्षेपलभ्यत्वात्। **मुख्यत्वेनेति**। ज्योत्स्नासादृश्याश्रयतयेत्यर्थः। **वक्त्रे एवेति**। इतररूपानाच्छादिते वक्त्रे इत्यर्थः। **प्राधान्येन**। इतरानाच्छादितत्वेन। **शशिनि त्विति**। श-

'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः।'

इत्यत्राऽपरत्वमिन्दोरनुगुणं न तु वक्त्रस्य प्रतिकूलमिति रूपकस्य साधकतां प्रतिपद्यते, न तूपमाया बाधकताम्।

'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।'

इत्यत्र पुनरालिङ्गनमुपमां निरस्यति, सदृशं प्रति परप्रेयसीप्रयुक्तस्यालिङ्गनस्याऽसंभवात्।

'पादाम्बुजं भवतु नो विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः।'

इत्यत्र मञ्जीरशिञ्जितम् अम्बुजे प्रतिकूलम् असंभवादिति रूपकस्य

---

नापि प्रतिकूला। गौणत्वेनाऽप्युपपत्तेरिति न रूपकं प्रति साधिका बाधिका वा। 'वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्यतः' इत्यत्राऽपरत्वमिन्दावनुगुणम्। मुखरूपेन्दौ सति किमपरेणेन्दुनेति प्रतीतेः। तथाप्रतीतिश्च रूपकेण विना नेति रूपकं प्रति साधकतां प्रतिपद्यते न पुनर्वक्त्रस्य प्रतिकूलम्। इन्दुसमानगुणे वक्त्रे सति किमपर इन्दुरुदित इति प्रतीतावत्राऽसंगत्यभावात्। अतो नोपमाबाधकम्। 'राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।' इत्यत्रालिङ्गनमुपमायां बाधकम्। स्वामिसदृशं प्रति प्रेयसीप्रयुक्तस्यालिङ्गनस्याऽनौचित्यात्। न तु रूपके साधकम्। 'पादाम्बुजं भवतु वो विजयाय मञ्जुमञ्जीरशिञ्जितमनोहरमम्बिकायाः।' इत्यत्र मञ्जीरशिञ्जितमम्बुजे प्रतिकूलम्। तत्राऽसंभवात्। अतो

---

शितादात्म्येन प्रतीते त्वित्यर्थः। **रूपकम्**। वक्त्रमेव शशीत्याकारकम्। तावतापि न संदेहे निरासः (? सन्देहसंकरः।) द्युतिपदस्य शोभारूपमुख्यार्थत्यागानौचित्यादिति भावः। ज्योत्स्ना यथा शशिनः सौभाग्यं वितनोति एवं हासद्युतिः शशिसदृशवक्त्रसौभाग्यं वितनोतीति वाक्यार्थः। **इन्दाविति।** इन्दुतादात्म्यप्रतीतावित्यर्थः। **साधकतामिति।** अपरत्वस्य पूर्वापेक्षित्वात् प्रथमेंदोरावश्यकत्वेन रूपकसाधकत्वम्। ननु उपमायां वक्त्रत्वेनैव मुखप्रत्यये शीतांशावपरत्वं व्याहन्येत। इंद्वन्तरस्याप्रतीतेरत आह। **इंदुसमानगुणे इति।** कथंचिदेवमर्थघटनासंभवेन वक्त्रप्राधान्ये प्रातिकूल्याभावात् उपमायां न बाधकमित्यर्थः। एवं चानयोरुदाहरणयोर्यत्कोटेः साधकमस्ति तत्कोट्यंशे संशयस्योत्कटत्वात्संकरलक्षणे च तुल्यकोटिकसंशयस्य विवक्षणान्नात्र संकर इत्याशयः। **न तु रूपके इति।** एतद्बीजमग्रे स्फुटम्। **अंबुजे।** तत्त्वेन प्रतीते।

बाधकम्, न तु पादेऽनुकूलमित्युपमायाः साधकमभिधीयते। विध्युपमर्दिनो बाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेः। एवमन्यत्रापि सुधीभिः परीक्ष्यम्।

**स्फुटमेकत्र विषये शब्दार्थाऽलंकृतिद्वयम्।**
**व्यवस्थितं च**

**अभिन्ने एव पदे स्फुटतया यत् उभावपि शब्दार्थाऽलंकारौ व्यवस्थां समासादयतः, सोऽप्यपरः संकरः। उदाहरणम्—**

**स्पष्टोल्लसत्किरणकेसरसूर्यबिम्ब-**

---

रूपके बाधकम्। नन्वेतदुपमासाधकमपि भवति। पादेऽनुकूलत्वात्। तत्कथं रूपकबाधकतामात्रत्वमस्योच्यते, न तूपमासाधकत्वमपीति। एवमन्यत्रापि यदेकत्राऽनुकूलं तद्बाहुल्येन परत्र प्रतिकूलम्, यच्चैकत्र प्रतिकूलं तत्तत एवाऽन्यत्राऽनुकूलम्। अन्यथा तथात्वस्यैवाऽसंभवादिति चेत्, सत्यम्। किं तु यस्य यथात्वमुत्कटं प्रतीयते तत्र तस्य तथात्वव्यपदेशः। अत्र तु विध्युपमर्दि बाधकं साधकापेक्षयोत्कटत्वेन प्रतीयत इति तेनैव व्यपदेशो युक्तः। तदेतदुक्तं विध्युपमर्दिबाधकस्य तदपेक्षयोत्कटत्वेन प्रतिपत्तेरिति। अन्ये तु तदन्यथा व्याचक्षते—विधीयतेऽनेनेति विधिः साधकं, तदुपमर्दि तस्माद्बलीयः। एतदुक्तं भवति—मञ्जीरशिञ्जितस्य पादे संभवमात्रेण न तावदुपमासाधकत्वं निर्वहति यावदम्बुजे तद्विरहो न निश्चीयते। तथा च तद्बाधकस्यैव प्राथमिकत्वात्तन्मुखेनैव व्यपदेशः। एवमन्यत्रापि साधकबाधकसत्त्वं सुधीभिः परिभावनीयम्।

**स्फुटमिति।**

विषयः पदम्। तेनैकत्र पदे यदुभौ शब्दार्थाऽलंकारौ स्फुटं व्यवस्थितौ भवतः, सोऽप्यपरः संकरः। उदाहरणम्—**स्पष्टोल्लसदिति।**

---

**विध्युपमर्दीति।** स्वविरोधिकोटिभूतविध्युपमर्दीत्यर्थः। उपमासाधकमित्युक्ते किंचिद्रूपकस्यापि साधकं स्यादिति संदेहो नापैति, बाधके त्वभिहिते तद्व्यवच्छेदाप्रतीतेः संदेहोच्छेद इत्याशयः। **एवमिति।** 'यस्यानिशं दिविषदश्वरणारविन्दमुत्तंसयन्त्यमितभक्तिभरावनम्राः।' इत्यादौ उत्तंसनमुपमाबाधकमिति बोध्यम्। तृतीयसंकरमाह। **स्फुटमिति।** स्फुटमित्यनेनास्फुटालंकारद्वयसंसर्गस्य नालंकारत्वं वैचित्र्यानाधायकत्वादिति सूचितम्। (**स्पष्टेति।** हरविजये १९

---

१ ठ. तस्यैव। मु. पु. तत्त्वस्यैव।

विस्तीर्णकर्णिकमथो दिवसाऽरविन्दम् ।
श्लिष्टाऽष्टदिग्दलकलापमुखावतार-
बद्धान्धकारमधुपावलि संचुकोच ॥ १८४ ॥

अत्र एकपदाऽनुप्रविष्टौ रूपकाऽनुप्रासौ ।

**तेनासौ त्रिरूपः परिकीर्तितः ॥ ९९ ॥**

तदयमनुग्राह्याऽनुग्राहकतया संदेहेन एकपदप्रतिपाद्यतया च व्यवस्थितत्वात्त्रिप्रकार एव संकरो व्याकृतः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम्, आनन्त्यात्तत्प्रभेदानामिति । प्रतिपादिताः शब्दाऽर्थोभयगतत्वेन त्रैविध्यजुषोऽलंकाराः ।

कुतः पुनरेष नियमो यदेतेषां तुल्येऽपि काव्यशोभाऽतिशयहेतुत्वे कश्चिदलंकारः शब्दस्य, कश्चिदर्थस्य, कश्चिच्चोभयस्येति चेत् ।

---

अत्र पादत्रये प्रत्येकं रूपकाऽनुप्रासौ प्रविष्टौ । शब्दाऽर्थाऽलंकृतीति प्रायो वादः । शब्दाऽलंकारयोरप्येतद्दर्शनात् । यथा—'कलकलोऽलकलोलदृशाऽन्यया' इत्यादावनुप्रासयमकयोः । **तेनेति** ।

तस्मादनुग्राह्याऽनुग्राहकतया संदेहेनैकपदप्रतिपाद्यतया व्यवस्थितत्वाच्च त्रिप्रकारोऽयं संकरः कथितः । प्रकारान्तरेण तु न शक्यो व्याकर्तुम् । भेदानामनन्तत्वात् ।

इति प्रदिपादिताः शब्दार्थतदुभयगतत्वेन त्रिविधा अलंकाराः । ननु त्रिविधानामप्येषां काव्यशोभातिशयहेतुत्वस्य तुल्यत्वेऽपि कुत एष प्रतिनियमः यत्कश्चिच्छब्दस्य कश्चिदर्थस्य कश्चिच्छब्दार्थयोरिति चेत् । उक्तमत्र प्रागेव

---

सर्गे संध्याकालवर्णनम् । ) स्पष्टमुल्लसंतः किरणा एव केसरं यस्य तादृशं सूर्यबिम्बमेव विस्तीर्णा कर्णिका यस्य, मिथः संबद्धाः अष्टौ दिश एव दलसमूहा यस्य तच्च तन्मुखं रात्रेरारंभस्तदवतारेण बद्धा अंधकारमधुपावलिर्यत्र तत् । ( वसंततिलका छन्दः । ) **प्रत्येकम्** । समस्तपदे । किरणकेसरसूर्यबिम्बविस्तीर्णकर्णिकदिठदलकलापेत्यत्र । **अनंतत्वादिति** । शब्दगतत्वेन अर्थगतत्वेन शब्दार्थोभयगतत्वेन चानुगतीकृत्योक्तम् । उपमारूपकादीन् विशिष्योपादाय त्वनंतत्वात्तत्संकरो वक्तुं न शक्यत इत्यर्थः । तदाह । **शब्दार्थेत्यादि** । पूर्वं ' व्यवस्थितत्वाच्च ' इत्यस्याप्ययमेवार्थः । **प्रागेवेति** । नवमोल्लासे इ-

---

१ च. मुषावतार ।

**उक्तमत्र, यथा काव्ये दोषगुणालंकाराणां शब्दाऽर्थोभयगतत्वेन व्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः। निमित्तान्तरस्याऽभावात्। ततश्च योऽलंकारो यदीयाऽन्वयव्यतिरेकावनुविधत्ते, स तदलंकारो व्यवस्थाप्यते इति। एवं च यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयोर्भावाऽभावाऽनुविधायितया उभयालंकारौ, तथा शब्दहेतुकार्थान्तरन्यासप्रभृतयोऽपि द्रष्टव्याः। अर्थस्य तु तत्र वैचित्र्यम् उत्कटतया प्रतिभासते इति वाच्याऽलंकारमध्ये वस्तुस्थितिमनपेक्ष्यैव लक्षिताः। योऽलंकारो यदाश्रितः स तदलंकार इत्यपि कल्पनायाम् अन्वयव्यतिरेकावेव समाश्रयितव्यौ, तदाश्रयणमंतरेण विशिष्टस्याश्रयाश्रयिभावस्याऽभावादित्यलंकाराणां यथोक्तनिमित्त एव परस्परव्यति-**

---

दोषगुणालंकाराणां शब्दार्थोभयगतत्वव्यवस्थायामन्वयव्यतिरेकावेव प्रभवतः। निमित्तऽन्तराऽभावात्। ततश्च योऽलंकारः शब्दाऽर्थयोर्मध्ये यस्याऽन्वयव्यतिरेकावनुविधत्ते स तदलंकार इति व्यवस्थाप्यते। शब्दाऽन्वयव्यतिरेकाऽनुविधायित्वं चैतदेव, यच्छब्दपरिवृत्यसहत्वम्। नन्वेवं यथा पुनरुक्तवदाभासः परम्परितरूपकं चोभयऽभावाऽभावानुविधायित्वेनोभयाऽलंकारस्तथाऽर्थशब्दहेतुकाऽर्थान्तरन्यासप्रभृतयोऽप्युभयाऽलंकार[1] भवेयुरिति चेत्, न। इष्टापत्तेः। एवं तर्हि कथमुभयाऽलंकारप्रस्तावमुल्लङ्घ्याऽर्थमात्राऽलंकारप्रस्तावे पठिता इति चेत्, तत्राऽर्थवैचित्र्यस्य प्रकटतया प्रतिभासात्। अथ योऽलंकारो यदाश्रितः स तदीय इत्येव किं न विभाग इति चेत्, तथा कल्पनायामप्यन्वयव्यतिरेकावेव समाश्रयितव्यौ। तद्व्यतिरेकेण विशिष्टस्याश्रयाश्रयिभावस्याऽभावात्। तस्मादलंका-

---

त्यर्थः। **परिवृत्यसहत्वमिति**। तत्त्वं शब्दगतत्वम्, शब्दस्य तत्सहत्वेऽर्थगतत्वम्, कस्यचिच्च तत्सहत्वे उभयगतत्वमिति भावः। **अर्थशब्दहेतुकेति**। क्षणदासावक्षणदेत्यादौ शब्दशक्तिमूलविरोधालंकारागभूतार्थांतरन्यास इत्यर्थः। प्रभृतिपदात् 'सकलकलं पुरमेतत्' इति शब्दसाम्यनिबंधनोपमादयः। **प्रकटतयेति**। साध्यसाधनभावादीनामर्थधर्मत्वादिति भावः। अत एव शब्दवैचित्र्यस्योत्कटतया पुनरुक्तवदाभासः शब्दालंकारमध्ये गणितः। वास्तवं सिद्धांतसिद्धं तु सर्वेषामुभयालंकारत्वमिति बोध्यम्। अलंकारसर्वस्वोक्तां युक्तिं शंकते। **अथेति**। **विशिष्टस्य**। तत्तदाश्रयविशिष्टस्य।

---

१ ज. यदीयौ भावाभावावन्।

रेको ज्यायान् ।

**एषां दोषा यथायोगं संभवन्तोऽपि के च न ।**
**उक्तेष्वन्तर्भवन्तीति न पृथक्प्रतिपादिताः ॥५६॥**

तथा हि अनुप्रासस्य प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोध इति ये त्रयो दोषाः, ते प्रसिद्धिविरुद्धतां अपुष्टार्थत्वं प्रतिकूलवर्णतां च यथाक्रमं न व्यतिक्रामन्ति, तत्स्वभावत्वात् । क्रमेणोदाहरणम्—

**चक्री चक्रारपङ्क्तिं हरिरपि च हरीन्धूर्जटिर्धूर्ध्वजान्तान्**
**अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूबराग्रं कुबेरः ।**
**रंहः संघः सुराणां जगदुपकृतये नित्ययुक्तस्य यस्य**
**स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥ १८५॥**

---

राणामन्वयव्यतिरेकनिबंधन एव परस्परं भेद इत्येव ज्यायः ।

नन्वलंकाराणां दोषाः प्राचीनैरभिहितास्ते किं न सन्त्येव, आहोस्वित्संभविनोऽप्युपेक्षिताः । आद्येऽनुभवविरोधः अन्त्ये न्यूनतेत्यत आह—
**एषामिति ।**

तथा हि अनुप्रासस्य तावत्त्रयो दोषाः, प्रसिद्ध्यभावो वैफल्यं वृत्तिविरोधश्च । ते च यथाक्रमं प्रसिद्धिविरोधाऽपुष्टार्थत्वप्रतिकूलवर्णत्वेभ्यो नातिरिच्यन्ते । तत्स्वभावत्वात् । तत्र प्रसिद्ध्यभावो यथा—**चक्रीति ।**

---

**ज्याय इति ।** साक्षाच्छब्दाश्रितत्वस्य यमकवक्रबंधादौ साक्षादर्थाश्रितत्वस्योत्प्रेक्षासमासोक्त्यादावसंभवात् कथंचित्तदाश्रितत्वस्यातिप्रसक्तत्वात्परिवृत्त्यसहशब्दाश्रितत्वं तत्सहशब्दार्थाश्रितत्वं वाच्यम् । तथा च कथंचिदाश्रितत्वांशप्रवेशो विफल इत्याशयः । **वैफल्यम् ।** चमत्काराऽजनकत्वम् । **वृत्तिविरोधः ।** उपनागरिकादिवृत्तिविरोधः । **प्रतिकूलेति ।** माधुर्यव्यंजिकायां वृत्तौ शब्दत एव टवर्गादेरोजोव्यंजिकाया उद्धतगुम्फविधानमुखेन शिथिलबन्धस्यार्थतः पर्युदासादिति भावः । **तत्स्वभावत्वादिति ।** तत्तल्लक्षणाक्रान्तत्वादित्यर्थः । **चक्रीति ।** ( मयूरकविकृते सूर्यशतके सूर्यरथवर्णनम् । ) अहिमरुचेः सूर्यस्य स स्यंदनो वोऽवतादिति संबंधः । जगदुपकारार्थं नित्यप्रवृत्तस्य यस्य चक्रकीलकपंक्ति च-

---

१ ज. प्र. ष्वन्तः पतन्तीति । २ झ. प्र. जाग्रान् ।

अत्र कर्तृकर्मप्रतिनियमेन स्तुतिः अनुप्रासानुरोधेनैव कृता, न पुराणेतिहासादिषु तथा प्रतीतेति प्रसिद्धिविरोधः ।

भण तरुणि रमणमन्दिरमानन्दस्यन्दिसुन्दरेन्दुमुखि ।
यदि सल्लीलोल्लापिनि गच्छसि तत्किं त्वदीयं मे ॥ १८६ ॥
अनणुरणन्मणिमेखलमविरतशिञ्जानमञ्जुमञ्जीरम् ।
परिसरणमरुणचरणे रणरणकमकारणं कुरुते ॥१८७॥

अत्र वाच्यस्य विचिन्त्यमानं न किंचिदपि चारुत्वं प्रतीयते इत्यपुष्टार्थतैवाऽनुप्रासस्य वैफल्यम् ।

अकुण्ठोत्कंठया पूर्णमाकण्ठं कलकण्ठि माम् ।
कम्बुकण्ठ्याः क्षणं कण्ठे कुरु कण्ठार्तिमुद्धर ॥ १८८ ॥

---

अत्र चक्रिप्रभृतीनां कर्तृणां चक्रारपङ्क्त्यादीनां कर्मणां प्रतिनियमेन स्तुतिरनुप्रासानुरोधेनैव निबद्धा न पुनरितिहासादिषु तथा प्रसिद्धेति प्रसिद्ध्यभावः । सोऽयं प्रसिद्धिविरोध एव । वैफल्यं यथा—**भणेति ।**

अत्र वाच्यस्याऽर्थस्य [1]विचिन्त्यमानं न किंचिच्चारुत्वं प्रतीयत इत्यपुष्टार्थत्वमेवाऽनुप्रासस्य वैफल्यमुच्यते । वृत्तिविरोधो यथा—'अकुण्ठोत्कण्ठया'—इ-

---

क्री विष्णुः, हरीनश्वान् हरिरिन्द्रः, ध्रूयानमुग्रम् तत्रत्यध्वजानामग्रान्, धूर्जटिः शिवः, नक्षत्रनाथः चन्द्रः, अक्षम युगम्, अरुणं सारथिं वरुणः, कूबराग्रं युगबंधनाग्रं कुबेरः, रंहो वेगं सुराणां समूहः, स्तौतीति सर्वान्वयि । ( स्रग्धरा छन्दः । **भणेति ।** ) हे तरुणि आनन्दस्यंदी सुंदरश्च यः इंदुस्तन्मुखि । सलीलमुल्लासयुक्ते । उल्लासो गमनवचनादिप्रकारः । यदि रमणमंदिरं गच्छसि तदा त्वदीयमेकं प्रयोजनं भणेत्यर्थः । अभिविद्धिरागनां [2] प्रति जारस्य वचः । **अननु-रणदिति** । शब्दरहितमणिमेखलम् । तत्स्थानस्य गुरुत्वेन लघुसंचारात् । अविरतसिंजानमंजुमंजीरम् इति च परिसरणविशेषणम् । परिसरणं गमनम् । भूषणानां च शिंजितम् । रणरणकमुत्कंठाम् । ईदृशं तव परिसरणं दृष्ट्वा मम चेतोऽकारणमुत्कंठां कुरुते इत्यर्थः । तवोल्लासान् इतः परं भर्तृगृहगमनाच्चेति भावः । ( आर्या छन्दः । ) **उच्यते इति ।** शब्दानुरूपार्थविरहेणानुप्रासस-त्त्वेऽपि नास्वादोत्कर्षः । शब्दालंकाराणामप्यर्थातिशयाधानद्वारेणैव चमत्कारि-

---

१ मु. पु. विविच्यमान । २ °लासिनि इत्युद्योतसम्मतः पाठः ।
३ अननु° इत्युद्योतसम्मतः पाठः ।

अत्र शृंगारे परुषवर्णाडम्बरः पूर्वोक्तरीत्या विरुध्यते इति परुषानुऽप्रासोऽत्र प्रतिकूलवर्णतैव वृत्तिविरोधः ।

यमकस्य पादत्रयगतत्वेन यमनमप्रयुक्तत्वं दोषः । यथा—

भुजंगमस्येव मणिः सदम्भा ग्राहाऽवकीर्णेव नदी सदम्भाः ।
दुरन्ततां निर्णयतोऽपि जन्तोः कर्षन्ति चेतः प्रसभं सदम्भाः॥ १८९॥

उपमायाम् उपमानस्य जातिप्रमाणगतन्यूनत्वम् अधिकता वा तादृशी अनुचितार्थत्वं दोषः । धर्माश्रये तु न्यूनाधिकत्वे यथाक्रमं हीनपदत्वमधिकपदत्वं च न व्यभिचरतः । क्रमेणोदाहरणम्—

चण्डालैरिव युष्माभिः साहसं परमं कृतम् ।
वह्निस्फुलिङ्ग इव भानुरयं चकास्ति ।
अयं पद्मासनासीनश्चक्रवाको विराजते ।

---

त्यादि । अत्र शृङ्गारे परुषवर्णाडम्बरो गुणविवेचनप्रस्तावोक्तरीत्या विरुद्ध इति प्रतिकूलवर्णतैव वृत्तिविरोध इत्युच्यते ।

यमकस्य तु पादत्रयगतत्वेन यमनमप्रयुक्तत्वमेव । कविभिस्तथाऽप्रयोगात् । यथा—**भुजंगमेति** ।

उपमायां तु यौ न्यूनाधिकोपमानत्वे दोषौ तत्रोपमाने उपमेयापेक्षया जातिगतं प्रमाणगतं वा यन्न्यूनत्वमधिकता वा तदनुचितार्थम् । धर्मगते न्यूनत्वाऽधिकत्वे यथाक्रमं न्यूनपदत्वाऽधिकपदत्वे । तत्र जातिगतं न्यूनत्वं यथा—'चण्डालैरिव युष्माभिः साहसं परमं कृतम्' । अत्र चण्डालत्वजातेर्न्यूनतया दुष्कर्मकारित्वव्यक्तेरनुचितार्थत्वम् ।

प्रमाणगतं यथा—'वह्निस्फुलिङ्ग इव भानुरयं चकास्ति' इति । जातिगतमधिकत्वं यथा—**अयमिति** ।

---

त्वात् । शब्दानां परिवृत्त्यसहत्वमात्रेण शब्दालंकारव्यपदेशः । (**भुजंगमस्येति** ।) सदंभाः दंभसहिताः । दुरंततां दुःखग्राह्यांतःकरणताम् । निर्णयतोऽपि निश्चिन्वतोऽपि । प्रसभं बलात् । प्रमुखे[1] इति पाठे आपाततः । कर्षति । सत्कांतिसर्पमणिरिव ग्राहयुक्तसजला नदीव । कांतिरंभःपदवाच्यत्वात् । (उपजातिश्छन्दः ।) **धर्मगते** । साधारणधर्मगते । **अनुचितार्थत्वमिति** । तद्व्यक्तिविवक्षायां तु न दोषत्वमिति बोध्यम् । (**अयमिति** । पद्ममेवासनं तत्र

---

१ छ. ज. प्रमुखे ।

युगादौ भगवान्वेधा विनिर्मित्सुरिव प्रजाः ॥ १९० ॥
पातालमिव नाभिस्ते स्तनौ क्षितिधरोपमौ ।
वेणीदण्डः पुनरयं कालिन्दीपातसंनिभः ॥ १९१ ॥

अत्र चण्डालादिभिरुपमानैः प्रस्तुतोऽर्थोऽत्यर्थमेव कदर्थित इत्यनुचितार्थता ।

स मुनिर्लाञ्छितो मौञ्ज्या कृष्णाजिनपटं वहन् ।
व्यराजन्नीलजीमूतभागाश्लिष्ट इवांऽशुमान् ॥ १९२ ॥

अत्रोपमानस्य मौञ्जीस्थानीयस्तडिल्लक्षणो धर्मः केनापि पदेन न प्रतिपादित इति हीनपदत्वम् ।

स पीतवासाः प्रगृहीतशार्ङ्गो मनोज्ञभीमं वपुराप कृष्णः ।
शतह्रदेन्द्रायुधवान्निशायां संसृज्यमानः शशिनेव मेघः ॥ १९३ ॥

---

ब्रह्मणः कल्पभेदेन भेदाद्ब्रह्मत्वं जातिः । प्रमाणगतमधिकत्वं यथा—**पातालमिति** ।

एषु चण्डालादिभिरुपमानैरुपमेयभूता अर्था अत्यन्तमेव कदर्थिताः । निन्दोपहासादिप्रतीतेरित्यनुचितार्थता । धर्मगतं न्यूनत्वं यथा—**स मुनिरिति**।

अत्रोपमेयमौञ्जीस्थानीयस्तडिल्लक्षणो धर्मो न केनापि पदेन प्रतिपादितः । न चाक्षेपादिनाऽपि स्पष्टं प्रतीयते अविनाभावाद्यभावादिति न्यूनपदत्वमेवैतत् । धर्मगतमधिकत्वं यथा —**स पीतेति** ।

आसीनः । विनिर्मित्सुः विनिर्मातुमिच्छुः । स्रष्टा ब्रह्मा । **पातालमिति** । कालिन्दीपातसन्निभः यमुनाप्रवाहतुल्यः । ) **उपहासेति** । अत्युत्कृष्टब्रह्माद्युपमानकत्वम् अपकृष्टोपमेयस्य असत्यतापर्यवसायितयोपहासाय भवतीति भावः । **स मुनिरिति** । ( मौञ्ज्या मुंजाख्यतृणनिर्मितमेखलया । लांछितः चिन्हितः । कृष्णाजिनरूपं पटं वस्त्रम् । ) जीमूतो मेघः । अंशुमान्सूर्यः । **अविनेति** । व्याप्त्यभावादित्यर्थः । तं विना सादृश्याप्रतीतेर्दोषत्वम् । ( **स पीतेति** । पीतवर्णं वासो वस्त्रं यस्य, प्रगृहीतं शार्ङ्गं धनुः येन, स श्रीकृष्णो मनोज्ञं सुन्दरं च तद्भीमं वपुः आप प्राप । क इव । शतह्रदा विद्युत् इन्द्रायुधं इन्द्रधनुश्च तद्वान् नि-

---

१ प्र. वान्स्रष्टा ।

**अत्रोपमेयस्य शङ्खादेरनिर्देशे शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वम् ।**

**लिङ्गवचनभेदोऽपि उपमानोपमेययोः साधारणं चेत् धर्ममन्यरूपं कुर्यात्, तदा एकतरस्यैव तद्धर्मसमन्वयाऽवगतेः सविशेषणस्यैव तस्योपमानत्वमुपमेयत्वं वा प्रतीयमानेन धर्मेण प्रतीयते इति प्रक्रान्तस्याऽर्थस्य स्फुटमनिर्वाहादस्य भग्नप्रक्रमरूपत्वम् । यथा—**

**चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभाग्यस्य मे ।**

---

अत्रोपमेये शङ्खाद्यनिर्देशादुपमाने तत्तुल्यस्य शशिनो ग्रहणमतिरिच्यते इत्यधिकपदत्वमेवैतत् ।

भिन्नलिङ्गत्वभिन्नवचनत्वे अप्युपमादोषौ नोक्तदोषाऽतिरेकिणौ । तथा हि । लिङ्गवचनयोर्भेदे यद्युपमानोपमेययोः साधारणधर्मवाचकं पदमन्यतरघटितलिङ्गं कुर्यात्, तदेकतरस्यैव तद्धर्मसमन्वयावगतेः कथमुपमानिर्वाहः । 'अथ प्रतीयमानं साधर्म्यमाश्रित्येयं स्यात्, तथाप्युपात्तधर्मविशिष्टस्यैवोपमानत्वमुपमेयत्वं वा प्रतीयेत । न च तथा प्रस्तुतम् । अतः प्रक्रान्तस्याऽभावाद्भग्नप्रक्रमत्वमेव दोषः । यथा—'चिन्तारत्नमिव च्युतोऽसि करतो धिङ्मन्दभागस्य मे ।' । अत्र च्युत इत्युपमेयमात्रेणाऽन्वीयते । पुंलिङ्गत्वात् । वचनभेदे

---

शायां शशिना संसृज्यमानो मेघ इव । उपजातिश्छन्दः । ) **अधिकपदत्वमेवैतदिति** । उपमानन्यूनाधिकधर्मत्वमेवोपमेयाधिकन्यूनधर्मत्वमिति पृथङ्नोक्तम् । **प्रतीयमानमिति ।** उपात्तधर्मातिरिक्तधर्ममित्यर्थः । **न च तथेति** । किं तु उपमाप्रस्तुतेरित्यर्थः । **प्रक्रांतस्य** । उपमालंकारस्य । **अभावात्** । असंभवात् । इवादिना धर्मत्वेनापि उपात्तधर्म एव बोध्यते तस्य निरुक्तोभयनिष्ठत्वे उपमानिर्वाहो नान्यथेति भावः । अपरत्र लिंगविपरिणामेन यथाकथंचिदन्वयेऽपि स्फुटत्वाभावेन चमत्कारापकर्ष इति तत्त्वम् । **मात्रेणेति ।** पुंस्त्वान्वितच्युतत्वस्य नपुंसकविशिष्टोपमानधर्मत्वाभावादिति भावः । अत एव यत्रानुपात्तसाधारणधर्मस्तत्र न दोषः । कल्प्यमानस्य लिंगरहितस्यैव कल्पनेन उभयसाधारणत्वात् । एवं यत्र लिंगरहितार्थोपस्थापकतिङन्तेन साधारणधर्मोपस्थितिस्तत्रापि न दोषः । यथा 'स्त्रीव गच्छति षंढोऽयम्' इत्यादौ । एवं च 'चंद्र इव सुंदरं मुखम्'

---

१ ज. °नेनापि ।

सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ।

यत्र तु नानात्वेऽपि लिङ्गवचनयोः सामान्याभिधायि पदं स्वरूपभेदं नापद्यते, न तत्रैतद्दूषणावतारः, उभयथाऽपि अस्य अनुगमक्षमस्वभावत्वात् । यथा—

गुणैरनर्घ्यैः प्रथितो रत्नैरिव महार्णवः ।
तद्वेषोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरताभृतः ।
दधते स्म परां शोभां तदीया विभ्रमा इव ॥ १९४ ॥

कालपुरुषविध्यादिभेदेऽपि न तथा प्रतीतिरस्खलितरूपतया वि-

---

यथा—'सक्तवो भक्षिता देव शुद्धाः कुलवधूरिव ।' । अत्र शुद्धा इत्युपमेयमात्रेणाऽन्वीयते । लिङ्गभेदोऽत्र विद्यमानोऽप्यप्रधानम् । उपमानस्य बहुत्वे लिङ्गभेदेऽप्युभयाऽन्वयसंभवात् । यत्र तु लिङ्गवचनयोर्भेदेऽपि सामान्याऽभिधायि पदमुपात्तरूपभेदं नापद्यते, किं तूपात्तेनैव रूपेणोभयत्राऽन्वेति, तत्र दोषत्वमेव नास्ति । उभयत्राऽप्यस्याऽनुगमयोग्यस्वभावत्वात् । तत्र लिङ्गभेदे यथा—'गुणैरनर्घैः प्रथितो रत्नैरिव महार्णवः ।' । अत्र लिङ्गभेदेऽपि विशेषणाऽन्वयस्याऽविशेषाद्दोषत्वाभावः । वचनभेदे यथा—**तद्वेष इति** ।

अत्र वचनभेदेऽपि मधुरताभृत इत्यस्योभयान्वयाविशेषान्न दोषत्वम् । एवं कालपुरुषविध्यादिभेदेऽपि भग्नप्रक्रम एव दोषः । तथाप्रतीतिरस्खलितरूपतया

---

इत्यादौ दोष एवेति बोध्यम् । अत्र शुद्धा इति बहुत्वविशिष्टशुद्धत्वसाधारणधर्मस्य बहुत्वावरुद्धसक्तुष्वेवान्वयो न त्वेकत्वावरुद्धवधूरूपे उपमाने इति भावः । **संभवादिति** । उभयत्रापि उपात्तरूपाभेदात् । तदाह । **यत्र त्विति** । **रूपभेदम्** । आनुपूर्वीभेदम् । **उपात्तेनैव रूपेणेति** । उपस्थितोऽर्थ इति शेषः । आनुपूर्वीसाम्येनोभयत्रान्वयसंभवादिति भावः । **अनुगमः** । अन्वयः । **अत्र लिंगेति** । गुणरत्नशब्दयोर्लिंगभेदेऽपि अनर्घ्यैरिति धर्मवाचकस्य लिंगद्वयेऽपि तुल्यरूपत्वान्न दोष इति भावः । तदीयो वेष उपमेयम् । विभ्रमा उपमानम् । असदृश इति मधुरताभृत इति दधत इति च धर्मवाचकान्युभयत्रान्वयसमर्थानि । असदृश इति कञन्तैकवचनं क्विबन्तबहुवचनं च । भृत इति क्तान्तैकवचनं क्विबन्तबहुवचनं च । दधत इति दधधारणे इत्यस्यैकवचनं धाञो बहुवचनं च । अत्र श्लेषोऽप्युपमोपपादक एवेति बोध्यम् । अन्याभिः स्त्रीभिः अन्यस्त्रीवेषैः । **कालः** । वर्तमानादिः । **पुरुषः** । प्रथममध्यमोत्तमरूपः । **विधिः** । अप्रवृत्तप्रवर्तनम् । **स्खलितत्वम्** । विजातीयविषयत्वम् ।

श्रान्तिमासादयतीत्यसावपि भग्नप्रक्रमतयैव व्याप्तः । यथा—

अतिथिं नाम काकुत्स्थात्पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात्प्रसादमिव चेतना ॥ १९५ ॥

अत्र चेतना प्रसादमाप्नोति न पुनरापेति कालभेदः ।

प्रत्यग्रमज्जनविशेषविविक्तमूर्तिः
कौसुम्भरागरुचिरस्फुरदंशुकान्ता ।
विभ्राजसे मकरकेतनमर्चयन्ती
बालप्रवालविटपप्रभवा लतेव ॥ १९६ ॥

अत्र लता विभ्राजते न तु विभ्राजसे इति संबोध्यमानानिष्ठस्य परभागस्य असंबोध्यमानविषयतया व्यत्यासात् पुरुषभेदः ।

'गङ्गेव प्रवहतु ते सदैव कीर्तिः'-इत्यादौ च गङ्गा प्रवहति न तु

---

विश्रान्त्यभावात् । तत्र कालभेदे यथा—**अतिथिमिति** ।

अत्र चेतना प्रसादमाप्नोतीति प्रकृतं न तु तमापेति कालभेदे प्रक्रमभेद एव। पुरुषभेदे यथा—**प्रत्यग्रेति** ।

अत्र लता विभ्राजत इति प्रस्तुतं न तु मा विभ्राजस इति तस्मात्पुरुषभेदः। संबोध्यनिष्ठस्य भ्राजनस्याऽसंबोध्यविषयतया अप्रतीतेः ।

विधिभेदे यथा—' गङ्गेव प्रवहतु ते सदैव कीर्तिः ।' इत्यादावप्रवृत्तप्रवर्त-

---

**विश्रांतिः** । चमत्कारः । (अतिथिमिति ।) काकुत्स्थात् । कुशात् । कुमुद्वती । कुमुदनागकन्या । ( पश्चिमात चरमात् यामिन्याः निशायाः यामात् चेतना चैतन्यं प्रसादं उद्बोधमिव । ) **अत्रेति** । यद्यप्यतीतपश्चिमरात्रयामाचेतना प्रसादमापेति न कालभेदस्तथापि पश्चिमरात्रियामजातीयादद्यापि प्रसादमाप्नोतीति कालभेद इति भावः। **प्रत्यग्रेति** । (रत्नावल्यां प्रथमांके वासवदत्तां प्रति वत्सराजस्योक्तिः । ) अभिनवस्नानविशेषेण शुद्धा मूर्तिः शरीरं यस्याः । कौसुंभरागेण रुचिरः स्फुरन् अंशुकप्रांतो यस्याः । नूतनकिसलययुक्तशाखाप्रभवा लतेव । ( वसन्ततिलका छन्दः । ) **अत्रेति** । तस्मात् विभ्राजत इति पाठो युक्तः। न च देवी संबोध्योक्तेः तत्र प्रथमपुरुषार्थोऽनन्वयः। हे देवि भवती भ्राजते इत्यन्वयसंभवात् । **संबोध्यनिष्ठस्येति** । मध्यमपुरुषवाच्यस्य

प्रवहतु इति अप्रवृत्तप्रवर्तनात्मनो विधेः । एवंजातीयकस्य चाऽन्यस्याऽर्थस्य उपमानगतस्याऽसंभवाद्विध्यादिभेदः ।

ननु समानम् उच्चारितं प्रतीयमानं वा धर्मान्तरमुपादाय पर्यवसितायाम् उपमायाम् उपमेयस्य प्रकृतधर्माऽभिसंबधान्न कश्चित्कालादिभेदोऽस्ति । यत्राऽप्युपात्तेनैव सामान्यधर्मेण उपमा अवगम्यते, यथा—'युधिष्ठिर इवायं सत्यं वदतीति'—तत्र युधिष्ठिर इव सत्यवाद्ययं सत्यं वदतीति प्रतिपत्स्यामहे । सत्यवादी सत्यं वदतीति च न पौनरुक्त्यम्

---

नात्मनो विधेर्भेदः । यतो गङ्गा प्रवहतीति विवक्षितं न तु सा प्रवहत्विति । एवंविधस्याऽन्यस्याऽर्थस्योपमानगतस्याऽसंभवाद्विध्यादिभेदो द्रष्टव्यः।ननूदाहृतेषु कथं दुष्टता । भिन्नकालसंभिन्नाद्धर्मादतिरिक्तमुपात्तं प्रतीतं वा कंचित्साधारणं धर्ममुपादायोपमापर्यवसाने पश्चाद्भिन्नकालादिसंभिन्नधर्मान्वयात् । तथा हि । विभ्राजस इत्यत्र विविक्तमूर्तत्वादिना लतानायिकयोरुपमापर्यवसाने पश्चाद्विभ्राजस इत्यस्य नायिकामात्रान्वयेऽपि को दोषः । अथ यत्रोपात्तेनैव धर्मेणोपमानिर्वाहः स च धर्मभेदः कालभेदाऽसंभिन्न एव, तत्र का गतिः । यथा—'यु-

---

संबोध्यार्थेनैवान्वयादिति भावः । **भेद इति** । आशीर्विहितलोट्प्रत्ययस्यानागतेष्टविषयार्थकत्वात्कीर्तावेवान्वयो न तु विद्यमाने गंगाप्रवाहे । एवं यथा गंगा प्रवहति तथा कीर्तिः प्रवहत्वित्यर्थे विधेर्भेद इति भावः । ननु प्रवहनस्य सिद्धत्वेऽपि कस्याचिदनागतार्थस्य गंगानिष्ठस्य विधिविषयत्वं स्यादत आह । **एवंविधस्येति** । **असंभवादिति** । उपमेयेऽसंभवादित्यर्थ । वस्तुतस्तादृशधर्मांतरस्य सत्त्वेऽपि तस्य प्रकृत्यर्थत्वाभावान्न तत्र विध्यर्थान्वयसंभव इति बोध्यम् । **विध्यादिभेद इति** । यद्यपि विधेरेकमात्रान्वयिनो न भेदस्तथाऽपि व्यत्यास एवात्र भेदपदार्थः । नन्विवपदेन धर्मान्तरेणैव साम्यं बोध्यतामुपात्तधर्मस्तूपमेय एवान्वेत्विति कथं लिंगादिभेदो दोष इति शंकते । **नन्विति** । **अतिरिक्तम्** । कालविशेषाद्यनवरुद्धम् । **उपात्तम्** । उच्चारितपदबोध्यम् । **प्रतीयमानम्** । अध्याहारलभ्यम् । **न दोष इति** । एवं काम इवायं राजा भातीत्यादौ सौंदर्यादिनाऽनुपात्तेन साम्यप्रतीतौ पश्चात् क्रियालभ्यकालभेदो यथा कामोऽभात् एवमयं भातीत्याकारो न दोषः । कामसदृशसुंदरोऽयं भातीति प्रतीतेः । **यथेति** । यथोपात्तसत्यवादित्वमेव साधर्म्यं, तच्च भिन्नकालमेव,

---

१ प्रतीयमान इत्युद्योतसम्मतः पाठः । २ 'न दोषः' इत्युद्योतसंमतः पाठः ।

आशङ्कनीयम् । रैपोषं पुष्णातीतिवत् युधिष्ठिर इव सत्यवदनेन सत्यवाद्ययमित्यर्थोऽवगमात् । सत्यमेवैतत् । किं तु स्थितेषु प्रयोगेषु समर्थनमिदं न तु सर्वथा निरवद्यम् प्रस्तुतवस्तुप्रतीतिव्याघातादिति सचेतस एवात्र प्रमाणम् ।

असादृश्याऽसंभवावप्युपमायाम् अनुचितार्थतायामेव पर्यवस्यतः । यथा—

ग्रश्नामि काव्यशशिनं विततार्थरश्मिम् ।

---

धिष्ठिर इवाऽयं सत्यवादी ' इति । युधिष्ठिरो हि सत्यमवादीत्, न तु वदतीति चेत् । उच्यते । तत्रापि सत्यवादीति प्रतीतधर्मेणैवोपमित्यव्याघातः । न च तथा सति सत्यवाद्ययं सत्यं वदतीति पर्यासौ सत्यं वदतीति पुनरुक्तमिति वाच्यम् । ' रैपोषं पुष्णाति ' इत्याद्यनुप्रयोगवददोषत्वात् । रैपोषमित्यत्राऽर्थव्ययेन पोषणस्यैवाऽत्राप्याजानिकसत्यवादित्वस्य प्रतीतेरिति । सत्यमात्थ । किं तु स्थितेष्वनुप्रयोगेषु क्वचित्तथा पुनरुक्तिमात्रसमर्थनं न तु सर्वथैव तन्निरवद्यम् । प्रस्तुतस्य रसादेः प्रतीतिस्खलनात् । न च तदसिद्धम् । सहृदयसंवेद्यत्वात् । किं च उपात्तमनादृत्य प्रतीतेनोपमा इति तुच्छम् । उपात्तक्रिययैव तद्विवक्षणात् ।

असादृश्याऽसंभवावप्युपमादूषणे अनुचितार्थतायामेव पर्यवस्यतः । यथा— ' ग्रश्नामि काव्यशशिनं विततार्थरश्मिम् । ' ।

---

युधिष्ठिरे वर्तमानसत्यवचनाभावात्, धर्मान्तरं तु नास्त्येवेत्यभिमानः । **सत्यवादीति** । सत्यवदनशीलत्वं धर्मांतरमित्यर्थ इति भावः । **अर्थव्ययेनेति** । न तु कार्पण्येन । यथा कथंचिदित्यर्थः । धनकृतं पोषणमित्यर्थलाभाय रैपोषमित्युक्तेर्न वैयर्थ्यम् । रैपोषमित्यत्र पुषेः प्रयोगः साधुत्वार्थ एव । **आजानिकेति** । स्वाभाविकेत्यर्थः । यथा युधिष्ठिरो लोभादिना न सत्यं वक्ति किं तु ताच्छील्यात्, तथाऽयमपीत्यर्थलाभान्न वैयर्थ्यमिति भावः । एवं गंगेवेत्यादावप्युज्ज्वलेत्यादिपदाध्याहारेण दोषोद्धार इत्याशयः । एतादृशाऽन्वयाऽध्याहारादिकल्पनमानुभाविकमित्याशयवानाह । **सत्यमिति** । **स्थितेति** । रैपोषमित्यादिषु साधुत्वार्थं नियमितेषु कथंचित्समर्थनमित्यर्थः । **उपात्तमिति** । उपात्तधर्ममित्यर्थः । **तुच्छमिति** । श्रुतहान्यश्रुतकल्पनाभ्यामास्वादप्रकर्षप्रतिबन्धादिति भावस्तदाह । **उपात्तेति** ।

अत्र काव्यस्य शशिना अर्थानां च रश्मिभिः साधर्म्यं कुत्रापि न प्रतीतमित्यनुचितार्थत्वम् ।

निपेतुरास्यादिव तस्य दीप्ताः शरा धनुर्मण्डलमध्यभाजः ।
जाज्वल्यमाना इव वारिधारा दिनार्धभाजः परिवेषिणोऽर्कात् ॥ १९७ ॥

अत्रापि ज्वलन्त्योऽम्बुधाराः सूर्यमण्डलात् निष्पतन्त्यो न संभवन्तीत्युपनिबध्यमानोऽर्थोऽनौचित्यमेव पुष्णाति ।

उत्प्रेक्षायामपि, संभावनं ध्रुवेवादय एव शब्दा वक्तुं सहन्ते, न यथाशब्दोऽपि । केवलस्याऽस्य साधर्म्यमेव प्रतिपादयितुं पर्याप्तत्वात् तस्य चास्यामविवक्षितत्वादिति तत्राऽशक्तिरस्याऽवाचकत्वं दोषः । यथा—

उद्ययौ दीर्घिकागर्भान्मुकुलं मेचकोत्पलम् ।
नारीलोचनचातुर्यशङ्कासंकुचितं यथा ॥ १९८ ॥

उत्प्रेक्षितमपि तात्त्विकेन रूपेण परिवर्जितत्वात् निरुपाख्यप्रख्यम्,

---

अत्र काव्यस्य शशिनाऽर्थानां च रश्मिभिः साधर्म्यं न क्वापि प्रसिद्धमिति तत्रोपमानिबन्धनमनुचितार्थमिति । **निपेतुरिति ।**

अत्रापि ज्वलदम्बुधारायाः सूर्यमण्डलान्निपतनमसंभवीति तन्निबन्धनमनौचित्यं पुष्णाति ।

उत्प्रेक्षायामपि ध्रुवेवादय एव शब्दा व्यक्तमुत्सहन्ते, न तु यथाशब्दोऽपि । केवलस्याऽस्य साधर्म्यमेव प्रतिपादयितुं समर्थत्वात् । अत उत्प्रेक्षायां यथाशब्दोपादानेऽवाचकत्वमेव । यथा—**उद्ययाविति ।**

निर्विषयत्वमप्युत्प्रेक्षादूषणमनुचितार्थत्वमेव । यत्तात्त्विकरूपाभावान्निरुपा-

---

( **निपेतुरिति ।** ) आस्यादिवेत्युत्प्रेक्षा । तूणाद्बाणाकर्षणे विलंबः स्यादिति भावः । धनुर्मंडलं परिवेषश्च बिंबप्रतिबिंबभावापन्ने । ( उपजातिश्छन्दः । ) **अनौचित्यमिति** । अप्रयुक्तत्वसांकर्यमप्यत्रेति बोध्यम् । ( **उद्ययाविति** । दीर्घिका वापी । ) मुकुलं मुकुलभावापन्नम् । मेचकं नीलम् । **उत्प्रेक्षादूषणम्** । उत्प्रेक्षाविषयसमर्थकाऽर्थांतरन्यासदूषणम् । **निरुपाख्यम्** । अलीकशशविषाणादि । तत्प्रख्यं तत्तुल्यम् । तत्र हेतुरुत्प्रेक्षाविषयस्य तात्विकरूपा-

This is included under विषम or, sometimes, under असङ्गत, or, what is still better, under विशेषोक्ति. ( Vide Udyota p. 124 ).

## 12 असम.

सर्वथैवोपमाननिषेधः असमाख्योऽलंकारः । R. G.

Ex.–भुवनत्रितयेऽपि &c.

What is striking in the examples of असम is the statement that the figure उपमा is absent. Thus असम is no figure. ( Vide Udyota p. 22 ).

## 13 असंभव.

असंभवोऽर्थनिष्पत्तेरसंभाव्यत्ववर्णनम् । को वेद गोपशिशुकः शैलमुत्पाटयेदिति ॥ Ku. शैलं गोवर्धनम् । उत्पाटयेत् उद्धरेत् ।

This is nothing but विरोध; for, the statement of an impossibility only ministers to विरोध. ( Vide Udyota p. 87 ).

## 14 अहेतु.

बलवति विकारहेतौ सत्यपि नैवोपगच्छति विकारम् । यस्मिन्नर्थः स्थैर्यान्मन्तव्योऽसावहेतुरिति ॥ Ru.

Ex. रूक्षेऽपि पेशलेन प्रखलेऽप्यखलेन भूषिता भवता । वसुधेयं वसुधाधिप मधुरगिरा परुषवचनेऽपि ॥ रूक्षे रूक्षाविषये । एवमुत्तरत्र । अत्र रूक्षादिके बलवति विकारकारणे सत्यपि राजा महासत्वाद्रूक्षत्वादिविकारं अपेशलत्वादिकं नायाति । Na.

This is विशेषोक्ति.

## 15 (a) आक्षेप.

उपमानाक्षेपश्चाक्षेपः । Vâ.

Ex. तस्याश्चेन्मुखमस्ति सौम्य सुभगं किं पार्वणेनेन्दुना ।

This is nothing but प्रतीप.

## 15 (b) आक्षेप.

अनिष्टस्य तथार्थस्य विध्याभासः परो मतः । S. D.

Ex. गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः । ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

A pretended affirmation like a pretended denial may also be regarded as आक्षेप.

## 16 आचार.

प्रकृतार्थोपयोगित्वं यत्राचारस्य तत्र सः । गोपस्यापि दधि ग्राह्यं काश्यां भक्षंति सूरयः । A.

Vide Remark on अनुपलब्धि.

## 17 आत्मतुष्टि.

आत्मतुष्टिरलंकारो यत्र स्यान्निर्णयस्तथा । अष्टमे मासि सीमंतो युक्तो मह्यं हि रोचते । A.

Vide Remark on अनुपलब्धि.

## 18 आवृत्तिदीपक.

त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकम् । वर्षत्यंबुदमालेयं वर्षत्येषा च शर्वरी ॥ उन्मीलंति कदंबानि स्फुटंति कुटजोद्गमाः । माद्यंति चातकास्तृप्ता माद्यंति च शिखावलाः ॥ Ku. पदस्यार्थस्य उभयोर्वा आवृत्तौ त्रिविधं दीपकम् । शर्वरी वर्षति वर्षमिवाचरति । उन्मीलंति विकसंति । कुटजोद्गमाः कुटजकलिकाः स्फुटंति विकसंति । शिखावलाः मयूराः ।

In the first line, the word वर्षति is repeated. In the second, the sense विकास is repeated. In the third, both the word माद्यन्ति and its sense are repeated.

This does not deserve to be दीपक in the first place. For, the common property is not mentioned only once. Besides, it does not reside in both the प्रकृत and the अप्रकृत. The followers of Mammata include these examples under वाचकलुप्तोपमा itself. ( Vide Udyota p. 65 ).

## 19 आशीः.

आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा । पातु वः परमं ज्योतिरवाङ्मनसगोचरम् ॥ Dan.

This does not deserve to be a figure inasmuch as no strikingness is apprehended from it.

## 20 उदाहरण.

सामान्येन निरूपितस्यार्थस्य सुखप्रतिपत्तये तदेकदेशं निरूप्य तयोरवयवावयविभाव उच्यमान उदाहरणम् ॥ R. G.

Ex. उपकारमेव &c.

The word निदर्शन in the example उपकारमेव &c. conveys the sense of corroboration. Thus, this is nothing but अर्थान्तरन्यास. (Vide Udyota p. 82 ).

## 21 उन्मीलित.

भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ । हिमाद्रिं त्वद्यशोमग्नं सुराः शीतेन जानते । लक्षितान्युदिते चन्द्रे पद्मानि च मुखानि च ॥ Ku. वैशिष्ट्यं वैजात्यम् । मीलितरीत्या भेदस्याज्ञाने प्राप्ते तत्र केनापि कारणेन भेदज्ञाने उन्मीलितालंकारः । तथा सामान्यतद्गुणालंकाररीत्या विशेषस्याज्ञाने प्राप्ते तत्र केनापि कारणेन विशेषज्ञाने विशेषकालंकारः ।

Although in हिमाद्रिं &c. the Mountain Himâlaya is recognised by means of cold, still, its presence cannot be inferred from the marks ' whiteness &c.,' since these marks are common to ' fame' also. The subsequent fact of the recognition of the Himâlaya only confirms the antecedent fact of its concealment by ' fame.' Thus उन्मीलित is not distinct from मीलित. ( Vide Udyota p. 126 ).

So also विशेषक is not distinct from सामान्य. For, the antecedent apprehension of resemblance can not be sublated by the subsequent apprehension of difference. ( Vide Mammata p. 134 and Udyota p. 135 ).

## 22 उपमान.

सादृश्याद्वस्तुनो भानमुपमानं प्रकीर्तितम् । A.

Ex. तां रोहिणीं विजानीहि ज्योतिषामत्र मंडले । यस्तन्वि तारकान्यासः शकटाकारमाश्रितः ॥ Ku.

The उपमान which is striking comes under उपमा. (Vide Udyota p. 141).

## 23 उभयन्यास.

सामान्यावप्यर्थौ स्फुटमुपमायाः स्वरूपतोऽपेतौ ।
निर्दिश्येते यस्मिन्नुभयन्यासः स विज्ञेयः ॥ Ru.

Ex. सकलजगत्साधारणविभवा भुवि साधवोऽधुना विरलाः ।

सन्ति कियन्तस्तरवः सुस्वादुसुगन्धिचारुफलाः ॥ यत्र सदृशौ द्वावर्थौ उपमास्वरूपतः व्यपेतौ तुल्यकक्षतया निर्दिश्येते तत्रोभयन्यासोऽलंकारः । उपमायां हि सामान्यस्यैवादेश्च प्रयोगः । इह तु नैवेत्यर्थः । उदाहरणे उपमेयभूतसाधूनां उपमानभूततरूणां विद्यमानेनाप्युपमानोपमेयभावेन न निर्देशः । किं तु तुल्यकक्षतयैव ।

This is nothing but प्रतिवस्तूपमा.

## 24 उल्लास.

एकस्य गुणदोषाभ्यामुल्लासोऽन्यस्य तौ यदि । (1) अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जान्हवी ॥ (2) काठिन्यं कुचयोः स्रष्टुं वांछत्यः पादपद्मयोः । निंदंति च विधातारं त्वद्धाटीष्वरियोषितः ॥ (3) तदभाग्यं धनस्यैव यन्नाश्रयति सज्जनम् । (4) लाभोऽयमेव भूपाल सेवकानां न चेद्वधः ॥ यत्र कस्यचिद्गुणेनान्यस्य गुणो दोषेण दोषो गुणेन दोषो दोषेण गुणो वा वर्ण्यते स उल्लासः । Ku. अपि मामित्यत्र साध्व्याः पवित्रतागुणेन जान्हव्याः स गुणो वर्णितः । काठिन्यमित्यादिः राजानं प्रत्युक्तिः । त्वद्धाटीषु तव युद्धयात्रासु कुचयोः काठिन्यं पादपद्मयोः स्रष्टुं वांछत्यः अरियोषितः शत्रुस्त्रियः विधातारं निंदंति । पतिमरणे कुचकाठिन्यस्य व्यर्थत्वात् पलायने च पादयोः काठिन्यस्यावश्यकत्वात् । अत्र कुचकाठिन्यव्यर्थत्वदोषेण विधातृनिंदादोषो वर्णितः । तद्भाग्यमित्यत्र सज्जनस्य सेव्यत्वगुणेन धनस्याभाग्यत्वदोषो वर्णितः । लाभोऽयमित्यत्र राज्ञः क्रौर्यदोषेण तत्सेवकानां वधाभावो गुणत्वेन वर्णितः ।

The varieties (1) and (2) come under काव्यलिंग or सम. (Vide Udyota p. 120).

The varieties (3) and (4) come under विषम. (Vide Udyota p. 123).

25

बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते । स्त्रीभिः कामोऽर्थिभिः स्वर्द्रुः कालः शत्रुभिरैक्षि सः ॥ Ku.
एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः। गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मः शरासने॥ Ku.

The words प्रस्तुतस्य यदन्यत्वम् occurring in the definition of the second kind of अतिशयोक्ति may be interpreted in the following manner also :—'When a subject under discourse is ascertained as identical with ( i. e. is looked upon as ) another thing ( that is also Hyperbole ).' According to this interpretation of the definition, उल्लेख comes under the second kind of अतिशयोक्ति. ( Vide Udyota p. 59 ).

26 ऊर्जस्विन्.

आभासस्यांगता यत्र तत्रोर्जस्वि मतं बुधैः । परदारस्तनस्पर्शी दिशः पश्यति कंपितः । अत्र शृंगाराभासो भयानकरसस्यांगम् । A.

This is nothing but गुणीभूतव्यंग्य काव्य. ( Vide K. P. IV. )

27 ऐतिह्य.

ऐतिह्यं किंवदंती चेत्प्रमाणत्वेन भण्यते । तिलमात्रमिदं लिंगं वर्षवर्धं विदुर्जनाः । किंवदंती जनश्रुतिः । A. इदं लिंगं प्रतिवर्षं तिलमात्रं वर्धते इति जनाः कथयंतीत्यर्थः ।

Vide Remark on अनुपलब्धि.

28 क्रम.

उपमेयोपमानानां क्रमसंबंधः क्रमः । Vâ.

Ex. तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः । जीयन्ते वल्लकीकुन्दकुसुमेन्दीवरस्रजः ॥

This is nothing but यथासंख्य.

29 गूढोक्ति.

गूढोक्तिरन्योद्देश्यं चेद्यदन्यं प्रति कथ्यते । वृषापेहि परक्षेत्रादायाति क्षेत्ररक्षकः ॥ Ku.

अन्यं प्रति वक्तव्यं अन्यं प्रति यदुच्यते तर्हि गूढोक्तिरलंकारः। हे वृष वृषो बलीवर्दः कामुकश्च। परक्षेत्रात् परकेदारात् अन्यदारेभ्यश्च। अपेहि दूरं गच्छ। अत्र परदारासक्त कामुकं प्रति वक्तव्यं तत् परक्षेत्रप्रविष्टं वृषभमुद्दिश्योक्तम्। A.

गूढोक्ति comes under ध्वनि or गुणीभूतव्यंग्य काव्य. It does not deserve to be a figure, because it does not minister to either the expressed or the suggested sense of the verse, as व्याजोक्ति in शैलेन्द्र. &c. ministers to 'love of the devotee for S'iva.' (Vide Udyota p. 109).

## 30 छेकोक्ति.

छेकोक्तिर्यदि लोकोक्तेः स्यादर्थांतरगर्भिता। भुजंग एव जानीते भुजंगचरणं सखे॥ यत्र लोकप्रवादस्य भिन्नार्थयुक्तता स्यात्तत्र छेकोक्तिः। केन चित्कस्यचिद्वृत्तांतं पृष्टस्य समीपस्थमन्यं निर्दिश्यायमेव तस्य वृत्तांतं जानातीत्युक्तवतोऽयं 'अहेः पादानहिरेव जानाति' इति लोकवादानुकारः। अत्र स चायं च लोकविदिते धनार्जनादिव्यापारे सहचारिणाविति विदितविषयतया लोकोक्त्यनुवादस्य प्रयोजने स्थिते रहस्येऽप्यनंगव्यापारे तस्यायं सहचर इति मर्मोद्घाटनप्रथितेन (जारार्थकश्लिष्टभुजंगशब्देन) गर्भीकृतम्। Ku.

This also does not deserve to be a figure, because there is no ministering to the expressed or suggested sense of the verse here as in गूढोक्ति. (Vide Udyota p. 110).

## 31 तिरस्कार.

दोषविशेषानुबंधाद्गुणत्वेन प्रसिद्धस्यापि द्वेषस्तिरस्कारः॥

Ex. श्रियो मे मा सन्तु क्षणमपि च माद्यद्गजघटामदभ्राम्यद्भृंगावलिमधुरसंगीतसुभगाः। निमग्नानां यासु द्रविणरसपर्याकुलहृदां सपर्यासाकर्यं हरिचरणयोरस्तमयते॥ R. G.

द्रव्यमदांधतया ईश्वरसेवा न भविष्यतीत्यतः श्रीर्मास्त्वेवेति केनचित्प्रार्थ्यते। अत्र गुणत्वेन प्रसिद्धाया अपि श्रियः ईश्वरसेवाऽभावरूपदोषसंबंधेन द्वेषः।

विशेष may also occur when a man hates a good thing by seeing some fault in it. Thus तिरस्कार is not a distinct figure

## 32 (a) तुल्ययोगिता.

हिताहिते वृत्तितौल्यमपरा तुल्ययोगिता। प्रदीयते पराभूतिर्मित्रशात्रवयोस्त्वया॥ Ku, पराभूतिः पराभवः उत्कृष्टसमृद्धिश्च। A.

Here, inasmuch as one and the same common property, i. e. the words प्रशीयते पराभूतिः, or the senses of these words identified through Paronomasia, is connected with मित्र and शात्रव, this is not distinct from the तुल्ययोगिता mentioned by Mammata. (Vide U. p. 68).

## 32 (b) तुल्ययोगिता.

गुणोत्कृष्टैः समीकृत्य वचोऽन्या तुल्ययोगिता । लोकपालो यमः पाशी श्रीदः शक्रो भवानपि Ku.

This is nothing but दीपक. ( Vide Udyota p. 68 ).

## 33 दृष्टान्त.

अन्वयख्यापनं यत्र क्रियया स्वतदर्थयोः । तं दृष्टान्तमिति प्राहुरलंकारं मनीषिणः ॥ Vâg

Ex. पतितानां संसर्गं त्यजन्ति दूरेण निर्मला गुणिनः । इति कथयन् जरतीनां हारः परिहरति कुचयुगलम् ॥

This is nothing but the second kind of निदर्शना.

## 34 निरुक्ति.

निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनम् । ईदृशैश्चरितैर्जाने सत्यं दोषाकरो भवान् ॥ Ku. नाम्नां योगतः व्युत्पत्त्या अन्यार्थकल्पनं निरुक्तिरलंकारः । ईदृशैरिति चन्द्रं प्रति विरहिण्या उक्तिः । दोषाकरः दोषाया : रात्रेः कर्ता दोषाणामाकरश्च । Ch.

This is nothing but a particular kind of श्लेष. ( Vide Udyota p. 140 ).

## 35 निश्चय.

अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः । S. D.

Ex. वदनमिदं न सरोजं नयने नेन्दीवरे एते । इह सविधे मुग्धदृशो मधुकर न मुधा परिभ्राम्य ॥

This does not deserve to be a figure, since no strikingness is apprehended from it.

## 36 परिकरांकुर.

साभिप्राये विशेष्ये तु भवेत्परिकरांकुरः । चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः ॥ अत्र चतुर्भुज इति विशेष्यं पुरुषार्थचतुष्टयदानसामर्थ्याभिप्रायगर्भम् । Ku.

From the word विशेषण in Mammatâ's definition of परिकर we may understand विशेष्य also. And उक्ति may mean description of a 'thing' in general, not of a 'subject' only. Thus, परिकर may occur even when the विशेष्य is significant. This shows that परिकरांकुर is not a distinct figure. ( Vide Udyota p. 108 ).

## 37 परिणाम.

परिणामः क्रियार्थश्चेद्विषयी विषयात्मना । प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥ Ku. कमलं हि स्वयं द्रष्टुमशक्तं नेत्ररूप भूत्वा पश्यतीति परिणामः । A.

परिणाम is defined as that which occurs when the object superimposed serves the purpose in hand, but only when fancied as identical with the subject of superimposition and not independently; exemplified in वदनेनेन्दुना &c. Here the Moon is identified with the 'face' and as such is subservient to the woman enabling her to remove the grief of separation.

In a Metaphor, the object superimposed has no such subserviency, and is thus distinct from this figure. Upon this, Udyota remarks that the apprehension of identity between the 'face' and the Moon does not add anything to the excellence of the 'face' the object under description and therefore this does not deserve to be a figure. ( Vide Udyota p. 30 ).

## 38 परिवृत्ति.

वस्तुनो व्यत्ययः परिवृत्तिः । S. K.
Ex. कुमुदवनमपश्रि श्रीमदम्भोजषण्डम्
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तम्
हतविधि लसितानां ह्रा विचित्रो विपाकः ॥
This is nothing but पर्याय.

## 39 पर्याय.

वस्तु विवक्षितवस्तुप्रतिपादनशक्तमसदृशं तस्य । यदजनकमजन्यं वा तत्कथनं
[illegible] पर्यायः ॥ Ru.

Ex. राजन् जहासि निद्रां रिपुबन्दीनिबिडनिगडशब्देन । तेनैव यदन्तरितः स कलकलो बन्दिवृन्दस्य ॥ विवक्षितं मनोगतम् । वाच्यवस्तु–मनोगतवस्तुनोः न सादृश्य-संबंधः नापि कार्यकारणभाव इत्यर्थः । उदाहरणे वाच्यवस्तुनि निद्रामोक्षरूपे न तात्पर्यम् । किं तु तेन शत्रुविजयरूपं मनोगतं वस्तु प्रतिपाद्यते ।

This is a ध्वनि or गुणीभूतव्यंग्य काव्य.

## 40 (a) पर्यायोक्त.

कार्यमुखेन कारणाभिधानं पर्यायोक्तम् । A. S.

Ex. नमस्तस्मै &c.

Here, according to A. S., the fact in the shape of a cause, of Râhu's head being cut by Vishnoo, is expressed through the effect, viz, the breasts of Râhu's wife being rendered useless, since this fact which is to be suggested cannot be expressed otherwise. But this पर्यायोक्त is not different from that mentioned by Mammata, because the definition of his पर्यायोक्त may be shown to apply to this example also in the following manner :—Here, Vishnu is suggested as one who cuts the head of Râhu and is expressed in a more striking manner as one who renders the breasts of Râhu's wife useless. ( Vide Udyota. p 97 ).

## 40 (b) पर्यायोक्त.

पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनम् । यामि चूतलतां द्रष्टुं युवाभ्यामास्यतामिह ॥ अत्र नायिकां नायकेन संगमय्य चूतलतादर्शनव्याजेन निर्गच्छंत्या तत्स्वाच्छंद्यसंपादनरूपेष्टसाधनम् । Ku.

This is nothing but a ध्वनिकाव्य. ( Vide Udyota p. 98 ).

## 41 (a) पिहित.

यत्रातिप्रबलतया गुणः समानाधिकरणमसमानम् । अर्थान्तरं पिदध्यादाविर्भूतमपि तत्पिहितम् ॥ Ru.

Ex. प्रियतमवियोगजनिता कृशता कथमिव तवेयमंगेषु । लसदिन्दुकलाकोमलकान्तिकलापेषु लक्ष्येत ॥

This may be included under मीलित.

## 41 (b) पिहित.

पिहितं परवृत्तांतज्ञातुः साकूतचेष्टितम् । प्रिये गृहागते प्रातः कांता तल्पमक-

ल्पयत् ॥ Ku. परवृत्तांतज्ञातुः परवार्तामर्मज्ञस्य साकूतं साभिप्रायं मर्मज्ञानसूचकं चेष्टितं आचरणं पिहितालंकार इत्यर्थः। अकल्पयत् अरचयत्। सपत्नीगृहे जागरणेन श्रांतस्य विश्रांत्यर्थमिति भावः। 'त्वदाचरणं सर्वं मया ज्ञातम्' इति तस्या अभिप्रायः।

This is nothing but सूक्ष्म. ( Vide Udyota p. 117 ).

## 42 पूर्व.

यत्रैकविधावर्थौ जायेते यौ तयोरपूर्वस्य। अभिधान प्रागभवतः सतोऽभिधीयेत तत्पूर्वम् ॥ Ru.

Ex काले जलदकुलाकुलदशदिशि पूर्वं वियोगिनीवदनम्। गलदविरलसलिलभरं पश्चादुपजायते गगनम् ॥ यत्र यौ एकविधावर्थौ जायेते तयोर्मध्ये अपूर्वस्य ( सहजातस्य पश्चाज्जातस्य वा ) प्रागभवतः प्राग्जातस्य सतः ( अयं प्राग्जातः एवं रूपेण ) अभिधानं तत्र पूर्वालंकारः।

This is nothing but the fourth kind of अतिशयोक्ति.

## 43 ( a ) पूर्वरूप.

पुनः स्वगुणसंप्राप्तिः पूर्वरूपमुदाहृतम्। हरकंठांशुलिप्तोऽपि शेषस्त्वद्यशसा सितः ॥ Ku.

This is nothing but तद्गुण. ( Vide Udyota p. 138 ).

## 43 ( b ) पूर्वरूप.

पूर्वावस्थानुवृत्तिश्च विकृते सति वस्तुनि। दीपे निर्वापितेऽप्यासीत्कांचीरत्नैर्महन्महः ॥ Ku. चशब्देन पूर्वरूपमिति संबध्यते। वस्तुनि वर्ण्यमानपदार्थे। विकृते विकारं प्राप्ते सति। निर्वापिते शमिते। महः तेजः। अत्र दीपतेजोविकारेऽपि रत्नतेजसा सद्मनः पूर्वावस्थानुवृत्तिः। A.

The effect may be said to be facilitated also when it continues to exist although its cause which is ascertained to be always present along with it, is absent. Thus, पूर्वरूप is not different from समाधि. ( Vide Udyota p. 120 ).

## 44 प्रतिषेध.

प्रतिषेधः प्रसिध्दस्य निषेधस्यानुकीर्तनम्। न द्यूतमेतत्कितव क्रीडनं निशितैः शरैः Ku. युद्धार्थं समागतं द्यूतकारं प्रति कस्यचिदुक्तिः। कितवः द्यूतकारः। द्यूते एव तव प्रागल्भ्यं न युध्दे इत्युपहासो व्यज्यते।

This is nothing but a ध्वनि or गुणीभूतव्यंग्य काव्य. ( Vide Udyota

## 45 प्रत्यक्ष.

प्रत्यक्षमिंद्रियज्ञानवर्णनं षड्विधं तु तत् । श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च रसित्वाऽघ्राय यां जनः । मोदते घृतपक्कां तां शष्कुलीमर्पयामि ते । A.

That प्रत्यक्ष which is striking is nothing but भाविक. The प्रत्यक्ष which is different from it does not constitute a figure. (Vide Udyota p. 140).

## 46 प्रश्नोत्तर.

प्रश्नं यत्रोत्तरे व्यक्तं गूढं वाप्यथवोभयम् । Vâg.

Ex. अस्मिन्नपारसंसारसागरे मज्जतां सताम् । किं समालम्बनं साधो रागद्वेषपरिक्षयः ॥

This is nothing but the second kind of उत्तर.

## 47 प्रस्तुतांकुर.

प्रस्तुतेन प्रस्तुतस्य द्योतने प्रस्तुतांकुरः । किं भृंग सत्यां मालत्यां केतक्या कंटकेद्धया ॥ प्रियतमेन साकमुद्याने विहरंती काचिद्भृंगं प्रत्येवमाहेति वाच्यार्थस्य प्रस्तुतत्वम् । Ku.

मयि मनोहारिण्यां सत्यां किमुद्वेगकारिण्या परवनितयेति नायकवृतांतः प्राधान्येन प्रस्तुतोऽभिव्यज्यते । Ch.

By the word अप्रस्तुत in अप्रस्तुतप्रशंसा we may also understand a subject under discourse other than the principal one. Thus, प्रस्तुतांकुर is included under अप्रस्तुतप्रशंसा. (Vide Udyota p. 57).

## 48 (a) प्रहर्षण.

वांछितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् । दीपमुद्योजयेद्यावत्तावदभ्युदितो रविः ॥ Ku.

## 48 (b) प्रहर्षण.

उत्कंठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणम् । तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥ Ku.

## 48 (c) प्रहर्षण.

यत्नादुपायसिध्यर्थात् साक्षाल्लाभः फलस्य च । निध्यंजनौषधीमूलं खनतो सा-

धितो निधिः ॥ Ku. निधिः भूमिगतद्रव्यम् । तद्दर्शनसाधनं यदंजनं तत्साधनौषधीमूलं खनता मनुष्येण निधिरेव साधितो लब्धः इत्यर्थः ।

By extending the meaning of कारणान्तरयोगत :, we get समाधि in the following cases :—(1) when the desired object is obtained unexpectedly ; ( 2 ) when, by means of an effort made for the obtainment of a desired object, something more is obtained ; and ( 3 ) when, by means of an effort made for the obtainment of a means to an end, the end itself is obtained. Thus, the three kinds of प्रहर्षण are included under समाधि. ( Vide Udyota p. 120).

## 49 प्रेयस्.

भावस्य चापरांगत्वे प्रेयोलंकार ईरितः । धिक्तारुण्यमिदं यत्र प्रिया दैवेन दूरिता । अत्र निर्वेदाख्यो भावो विप्रलंभशृंगाररसस्यागम् । A.

Vide Remark on ऊर्जस्विन्.

## 50 प्रौढोक्ति.

प्रौढोक्तिरुत्कर्षाहेतौ तद्धेतुत्वप्रकल्पनम् । कचाः कलिंदजातीरतमालस्तोममेचकाः ॥ Ku. कलिंदजा यमुना तस्यास्तीरे ये तमालस्तोमाः तद्वत् मेचकाः श्यामाः । अत्र तमालानां श्यामलत्वे यमुनातीरोत्पन्नत्वं न हेतुरित्यहेतोस्तस्य ' श्यामसमीपस्थं श्यामं भवति ' इति युक्तिमाश्रित्य तमालविशेषणं कृतम् । A.

This is that kind of अतिशयोक्ति where there is असंबन्धे संबंधः. ( Vide Udyota p. 110 ).

## 51 ( a ) भाव.

यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन । गमयति तदभिप्रायं तत्प्रतिबन्धं च भावोऽसौ ॥ Ru.

Ex. ग्रामतरुणं तरुण्या नववंजुलमंजरीसनाथकरम् ॥ पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ यत्रासंबद्धहेतुना जायमानो विकारः स्वाश्रयस्य कंचिदभिप्रायं स्वस्य हेतुना सह संबंधं च बोधयति तत्र भावालंकारः । ग्रामेति । वंजुलो वृक्षविशेषः तन्मंजरीयुक्तः करो यस्य तादृशं ग्रामतरुणं पश्यंत्यास्तरुण्याः मुखच्छाया मलिना भवतीत्यर्थः । अत्र मालिन्यस्य मंजरीदर्शनं न क्वापि हेततया प्रसिद्धमित्यसंबद्धो हेतुः । मालिन्यरूपविकारेण वंजुलवने कृतसंकेता न गतेति व्यज्यते। तद्द्वारा मालिन्यमंजरीदर्शनयोः संबन्धश्च व्यज्यते ।

This is सूक्ष्म. ( Vide Udyota p. 117 ).

## 51 ( b ) भाव.

अभिधेयमभिदधानं तदेव तदसदृशसकलगुणदोषम् । अर्थान्तरमवगमयति यद्वाक्यं सोऽपरो भावः ॥ Ru.

एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशम्। किं याचसे तदिह वासमियं वराकी श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ ॥ यत्र वाच्यार्थं प्रतिपादयद्वाक्यं वाच्यार्थापेक्षया विलक्षणविधिप्रीतेषधयुक्तं वक्तुरन्याभिप्रायं बोधयति तत्र भावालंकार इत्यर्थः। एकाकिनीति। निवासं याच्यमानायास्तरुण्याः पाथिकं प्रत्युक्तिः। अत्र वाच्यो निवासनिषेधः निवासविधिरूपमभिप्रायं बोधयति।

This is a ध्वनिकाव्य.

## 52 भावशबलता.

तद्भावशबलत्वं स्याद्बहूनां चेत्परांगता। धिङ्मां भोगरतं संतः किं वक्ष्यंति त्यजामि तान्। ( भोगरतं मां धिक्। अनेन निर्वेदरूपभावो व्यज्यते। संतः कि वक्ष्यंति। अनेन शकारूपभावो व्यज्यते। तान् भोगान् त्यजामि। अनेन मतिरूपभावो व्यज्यते। विरक्तस्योक्तिरियम्। ) अत्र निर्वेदशंकामतीनां भावानां शांतरसस्यांगत्वम्। A.

Vide Remark on ऊर्जस्विन्.

## 53 भावसंधि.

परांगं भावयोर्योगो भावसंधिरलंकृतिः। यांती वेलां प्रतीक्षंती विलंब्य प्रियमाप सा। अत्रौत्सुक्यस्य शंकायाश्च संधिः शृंगारसस्यांगम्। A.

Vide Remark on ऊर्जस्विन्.

## 54 भाविक.

स्वाभिप्रायस्य कथनं यदि वाप्यन्यभावना।
अन्यापदेशो वा यस्तु त्रिविधं भाविक विदुः ॥ S. K.

Ex. निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागाधरो
नेत्रे दूरमनंजने पुलकिता तन्वी तवेयं तनुः।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमा
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम् ॥

This is a ध्वनिकाव्य.

## 55 भावोदय.

भावोत्पत्तेः परांगत्वे भावोदय इति स्मृतः। सा प्रियं वीक्ष्य नम्रास्या नाशकद्रक्तुमीप्सितम्। अत्र व्रीडाख्यभावस्योत्पत्तिः शृंगाररसस्यांगम्। A.

Vide Remark on ऊर्जस्विन्.

## 56 मत.

तन्मतमिति यत्रोक्त्वा वक्तान्यमतेन सिद्धमुपमेयम् ॥ ब्रूयादथोपमानं तथा

Ex. मदिरामदभरपाटलमलिकुलनीलालकालिधम्मिल्लम् । तरुणीमुखमिति यदिदं कथयति लोकः समस्तोऽयम् ॥

मन्येऽहमिन्दुरेषः स्फुटमुदयेऽरुणरुचिः स्थितः पश्चात् । उदयगिरौ छन्नपरैर्निशा-तमोभिर्गृहीत इव ॥

This may be included under उत्प्रेक्षा.

## 57 मिथ्याध्यवसिति.

किंचिन्मिथ्यात्वसिध्यर्थं मिथ्याऽर्थांतरकल्पनम् । मिथ्याध्यवसितिर्वेश्यां वशये-त्खस्रजं वहन् ॥ Ku. कस्यचिन्मिथ्यात्वं किंचिन्मिथ्यात्वं तत्सिध्यर्थं मिथ्याभूतार्थां-तरस्य कल्पनं मिथ्याध्यवसितिरलंकारः । वेश्यामित्याद्युदाहरणम् । वेश्यावशीकरणस्या-त्यंतासंभावितत्वं द्योतयितु कस्यचिदुक्तिः । खस्रजं आकाशपुष्पमालाम् । अत्र खपु-ष्पमालावहनोक्त्या वेश्यावशीकरणस्य मिथ्यात्वसिद्धिः । A.

This is that kind of अतिशयोक्ति where there is असंबंधे संबंधः. (Vide Udyota p. 110).

## 58 मुद्रा.

सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैः । नितंबगुर्वी तरुणी दृग्युग्मविपुला च सा ॥ अत्र नायिकावर्णनपरेण युग्मविपुलापदेनास्यानुष्टुभो युग्मविपुलानामत्वरूपसूच्यार्थ-सूचनं मुद्रा । Ku.

This does not deserve to be a figure, because it does not minister to the object under description. (Vide Udyota p. 137).

## 59 युक्ति.

युक्तिः परातिसंधानं क्रियया मर्मगुप्तये । त्वामालिखंती दृष्ट्वाऽन्यं धनुः पौष्पं करेऽलिखत् ॥ Ku. गोप्यार्थरक्षणाय क्रियया परवंचनं युक्तिरलंकार इत्यर्थः । त्वामिति । नायकं प्रति दूत्या उक्तिः । त्वां नायकं आलिखंती नायिका अन्यं दृष्ट्वा गोप्यार्थसंभेदाभिया तच्चित्रहस्ते पौष्पं धनुरलिखत् । अत्र 'कामो लिखितः' इति परवंचनम् ।

The word उक्ति in व्याजोक्ति may mean simply an 'act.' Thus, युक्ति is but व्याजोक्ति. (Vide Udyota p. 110).

## 60 रत्नावली.

क्रमिकं प्रकृतार्थानां न्यासं रत्नावलीं विदुः । चतुरास्यः पतिर्लक्ष्म्याः सर्वज्ञस्त्वं महीपते ॥ Ku. यथाकथंचित्प्रकृतसंबंधिनामर्थानां प्रसिद्धक्रमानुसारिप्रतिपादनं रत्नावल्यलंकार इत्यर्थः । चतुरास्यः ब्रह्मा सुंदरमुखश्च । लक्ष्म्याः पतिः विष्णुः संपत्ति-मांश्च । सर्वज्ञः शंकरः सर्वविच्च । राजानं प्रति कवेरुक्तिः ।

This does not deserve to be a figure, because the object under description is ministered to by रूपक only and not by क्रम also. (Vide Udyota p. 137).

## 61 रसवत्.

अन्यांगत्वे रसस्य स्याद्रसवन्नाम तद्यथा। अहो स्यूतशरीरार्धः शंभुर्देव्या वशीकृतः। अत्र शृंगाररसः अद्भुतरसस्यांगम्। A.

Vide Remark on ऊर्जस्विन्.

## 62 ललित.

वर्ण्ये स्याद्वर्ण्यवृत्तांतप्रतिबिंबस्य वर्णनम्। ललितं निर्गते नीरे सेतुमेषा चिकीर्षति॥ Ku. आगत्य प्रतिनिवृत्ते नायके तदानयनं कर्तुमिच्छंती नायिकामुद्दिश्य सख्या उक्तिः।

Ku. distinguishes this figure from निदर्शना by the fact that, in the latter, both the वृत्तान्त in question and the वृत्तान्त not in question which terminate in comparison are expressed by words, whilst, in the former they are not so. Upon this, Udyota remarks that there is no rule that निदर्शना occurs only when the प्रस्तुत and the अप्रस्तुत वृत्तान्तs are expressed by words. निदर्शना may occur even when these are implied. Thus, this figure is nothing but आर्थी निदर्शना. (Vide Udyota p. 47).

## 63 लिंग.

तल्लिंगं नाम यत्र स्याद्वर्ण्यचिन्हे प्रमाणता। त्रिलोक्याः शंकरः साक्षी त्रिभिर्नेत्रैः प्रतीयते। A.

Vide Remark on अनुपलब्धि.

## 64 (a) लेश.

लेशः स्याद्दोषगुणयोर्गुणदोषत्वकल्पनम्। अखिलेषु विहंगेषु हंत स्वच्छंदचारिषु। शुक पंजरबंधस्ते मधुराणां गिरां फलम्॥ Ku. अत्र सर्वपक्षिणामवाग्मित्वदोषो गुणत्वेन, शुकस्य वाग्मित्वगुणो दोषत्वेन च वर्णितः। A.

विशेष occurs also when a good thing is looked upon as bad and a bad thing as good from a particular standpoint. Thus, लेश

## 64 (b) लेश or लव.

लेशो लेशेन निर्भिन्नवस्तुरूपनिगूहनम् । Dan.

Ex. राजकन्यानुरक्तं मां रोमोद्भेदेन रक्षकाः । अवगच्छेयुराज्ञातमहो शीतानिलं वनम् ॥

अत्र शीतानिलनिमित्तको रोमोद्भेदः न तु राजकन्यानुरागनिमित्तक इति सूच्यते । This is nothing but व्याजोक्ति.

## 65 लोकोक्ति.

लोकप्रवादानुकृतिर्लोकोक्तिरिति भण्यते । .सहस्व कतिचिन्मासान्मीलयित्वा विलोचने ॥ Ku. अनुकृतिः अनुकरणम् । अत्र लोचने मीलयित्वेति लोकप्रवादानुकरणम् । विरहिणीं प्रत्युक्तिः । एवं झषं मारयित्वा तिष्ठतीत्यादावपि । A.

This does not deserve to be a figure, because there is here no ministering to the expressed or suggested sense of the verse. (Vide Udyota p. 109).

## 66 वक्रोक्ति.

साहश्यालक्षणा वक्रोक्तिः । Vâ.

Ex. उन्मिमील कमलं सरसीनां कैरवं च निमिमील मुहूर्तात् ।

अत्र नेत्रधर्मौ उन्मीलननिमीलने साहश्याद्विकाशसंकोचौ लक्ष्यतः ।

This does not deserve to be a figure because no strikingness is apprehended from it.

## 67 वर्धमानक.

रूपधर्माभ्यामाधिक्ये वर्धमानकम् । Rat.

Fx. जम्बीरश्रिय &c.

This is obviously nothing but सार. (Vide Udyota p. 117).

Some hold that the verse बिम्बोष्ठ एव रागस्ते &c. is an example of the figure वर्धमानक and not of पर्याय as is held by Mammata, because, the word पर्याय, they say, is ordinarily employed by the people in connection with a thing which connects itself with another place after its connection with the first place is destroyed; but in बिम्बोष्ठ एव &c., the connection of राग with बिम्बोष्ठ is not destroyed.

These men are not right, however. Because, the definition of पर्याय does not say anything about एकसंबंधनाश. It is true that the word which is chosen to designate the figure is the same as is used in ordinary life, still, this fact ought not to lead us to suppose that the word has been used in the same sense in which it is employed in ordinary life. This will show that there is no necessity to admit वर्धमान as a distinct figure. (Vide Udyota p. 104. also R. G. p. 466 and 480).

## 68 विकल्प.

विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मता । Ku.

Ex. इह नमय &c.

There is no ground to recognise this as a figure, because विकल्प does not contribute to the excellence of the object under description, and also because the general definition of a figure उपकुर्वन्ति &c. given in the eighth Ullâsa does not apply to it. Others however include this under ससंदेह. (Vide Udyota p. 29).

## 69 विकस्वर.

यस्मिन्विशेषसामान्यविशेषाः स विकस्वरः । Ku.

Fx. अनन्तरत्नप्रभवस्य &c.

Here, two अर्थान्तरन्यासs, in one of which the particular is corroborated by the general, and in the other, the general is corroborated by the particular, exist together independently of each other. Thus, this is nothing but अर्थान्तरन्याससंसृष्टि. (Vide Udyota p. 82).

## 70 विचित्र.

विचित्रं तत्प्रयत्नश्चेद्विपरीतः फलेच्छया । नमंति संतस्त्रैलोक्यादपि लब्धुं समुन्नतिम् ॥ Ku.

नमंति प्रह्वीभवंति अनुद्धतस्वभावाः भवंति च । समुन्नतिं उच्चत्वं उत्कर्षं च । A

The making of an effort which is inconsistent with a desired object is also Inequality. Thus, विचित्र is not distinct from विष

## 71 वितर्क.

संशयोत्तरमनिर्णये ऊहो वितर्कः। U.

Ex. अस्याः सर्गविधौ &c.

This does not deserve to be a distinct figure. For, inasmuch as a doubt must necessarily be admitted as the cause of वितर्क, it is this doubt that constitutes the figure. वितर्क although present does not contribute to the excellence of the object under description, and does not therefore constitute a figure. Thus, वितर्क is included under ससंदेह. ( Vide Udyota p. 28 ).

## 72 विधि.

सिद्धस्यैव विधानं यत्तदाहुर्विध्यलंकृतिम्। पंचमोदंचने काले कोकिलः कोकिलो भवेत्॥ Ku. पंचमस्य स्वरविशेषस्य उदंचनमाविष्करणं यस्मिस्तादृशे काले वसंते कोकिलः कोकिलः मनोहर कोकिलः भवेत्। अत्र कोकिलस्यैव सतः वसंते पुनर्विधानं मनोहरत्वबोधनाय। A.

This is nothing but a ध्वनि or गुणीभूतव्यंग्य काव्य. ( Vide Udyota p. 140 ).

## 73 विवृतोक्ति.

विवृतोक्तिः श्लिष्टगुप्तं कविनाविष्कृतं यदि। श्लिष्टगुप्तं वस्तु यथाकथंचित्कविनाऽऽविष्कृतं चेद्विवृतोक्तिः। Ku. पूर्वार्धे विलासप्रार्थनारूप गुप्तं वस्तु उत्तरार्धे आमंत्रणभंगिसूचितपदेन कविनाविष्कृतम्।

Ex. गच्छाम्यच्युत दर्शनेन भवत. किं तृप्तिरुत्पद्यते<br>
किंत्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।<br>
इत्यामंत्रणभंगिसूचितवृथावस्थानखेदालसाम्<br>
आश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥

This also does not deserve to be a figure because it is merely a गुणीभूतव्यंग्य काव्य, and besides it does not minister to the expressed sense of the verse or the flavour of the piece &c. ( Vide Udyota p. 109 ).

## 74 विशेषक.

Vide उन्मीलित.

## 75 ( a ) विशेषोक्ति.

एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्तिः। Vâ. यथा—' द्यूतं हि नाम पुरुषस्यासिंहासनं राज्यम्।

This is nothing but रूपक, inasmuch as there is here the superimposition of राज्य upon द्यूत; then to render this superimposition possible, the राज्य also is supposed as void of a throne. Thus, the रूपक is strengthened. Similarly, in धर्मो वपुष्मान् &c., where additional qualities are supposed in कार्तवीर्य—the object under description, there is no other figure than रूपक. ( Vide Udyota p. 80 ).

## 75 (b) विशेषोक्ति.

गुणजातिक्रियादीनां यत्र वैकल्यदर्शनम् । विशेषदर्शनायैव सा विशेषोक्तिरिष्यते ॥ S. K.

Ex. न कठोरं न वा तीक्ष्णमायुधं पुष्पधन्वनः ।
तथापि जितमेवाभूदमुना भुवनत्रयम् ॥

This is nothing but विभावना.

## 76 विषादन.

इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनम् । दीपमुद्योजयेद्यावन्निर्वाणस्तावदेव सः ॥ Ku. इष्यमाणात् ईप्सितार्थात् विरुद्धो विपरीतो योऽर्थस्तस्य संप्राप्तिः । उद्योजयेत् स्नेहार्पणेन प्रदीपयेत् । निर्वाणः नष्टः । A.

That one thing should be desired and another opposed to that desire should be obtained is also Inequality. Thus, विषादन is not distinct from विषम. ( Vide Udyota p. 124 ).

## 77 व्याजनिंदा.

निंदाया निंदया व्यक्तिर्व्याजनिंदेति गीयते । विधे स निंद्यो यस्ते प्रागेकमेवाहरच्छिरः ॥ Ku. स शिवः । एकमेव न तु सर्वाण्यपि । अत्र हरनिंदया दुःखमयप्रपंचकर्तृत्वेन स्रष्टुर्निंदा गम्यते । A.

The word स्तुति in व्याजस्तुति may mean simply बोधन. Thus, व्याजस्तुति occurs also when from the censure of one the censure of another is suggested. This shows that व्याजनिन्दा is not a distinct figure. ( Vide Udyota p. 89 ).

## 78 व्याघात.

अन्यैरप्रतिहतमपि कारणमुत्पादनं न कार्यस्य ।

Ex. यत्र सुरतप्रदीपा निष्कज्जलवर्तयो महामणयः ।
माल्यस्यापि न गम्या हृतवसनवधूविसृष्टस्य ॥
उत्पादनं उत्पादकम् । माल्यस्यापि न गम्याः माल्यप्रक्षेपेणापि न निर्वाप्याः ।

This is but विशेषोक्ति.

## 79 शब्द.

श्रुत्यादिवाक्यविन्यासान्निश्चयः शब्द उच्यते । सांब शंभुःपरं ब्रह्म कैवल्योपनिषच्छ्रुतेः । A.

Vide Remark on अनुपलब्धि.

## 80 श्रुति.

प्रकृतार्थस्य शब्देन निर्वाहो यत्र सा श्रुतिः । मृत्युं हरसि भक्तानां तुष्टो मृत्युंजयोऽसि यत् । A.

Vide Remark on अनुपलब्धि.

## 81 समप्राधान्यसंकर.

द्वयोरपि प्रधानत्वे समप्राधान्यसंकरः । रत्नस्तंभेषु सक्रांतप्रतिबिंबशतैर्वृतः । ज्ञातो लंकेश्वरः साक्षादांजनेयेन तत्वतः ॥ अत्रोदात्तस्यातिशयोक्तेरंगत्व तस्याश्चोदात्तालंकारस्येति समप्राधान्यम् । A. अत्र द्वयोरलंकारयोः सापेक्षतया समप्राधान्यम् ।

This is nothing but अंगांगिभावसंकर.

पिनष्टीव तरंगाग्रैः समुद्रः फेनचंदनम् । तदादाय करैरिंदुर्लिंपतीव दिगंगनाः । अत्रोत्प्रेक्षयोः समप्राधान्यम् । अन्योन्यनिरपेक्षवाक्यद्वयोपात्तत्वात् । ku. अत्र द्वयोरलंकारयोर्निरपेक्षतया समप्राधान्यम् ।

This is nothing but संसृष्टि.

## 82 समाधि.

समाधिमन्यधर्माणामन्यत्रारोपणं विदुः । S. K.

Ex. चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन् सरय्वा
वादद्यूतं सुचिरमभवत् सिद्धयूनोः कयोश्चित् ।
एको ब्रूते प्रथमनिहितं केशिनं कंसमन्यः
स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥

This is nothing but रूपक.

## 83 (a) समाहित.

समाहितं तद्भावस्य शांतेर्यत्र परांगता । मुक्तमाना स्वयं सा भूत्तर्जिता घनगर्जितैः । अत्रामर्षाख्यभावस्य शांतिः शृंगाररसस्यांगम् । A.

Vide Remark on ऊर्जस्विन्.

## 83 (b) समाहित.

यत्सादृश्यं तत्संपत्तिः समाहितम् । Vâ.

Ex. तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः,
शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा ।
चिन्तामोहमिवास्थिता मधुलिहां शब्दैर्विना लक्ष्यते,
चण्डी मामवधूय पादपतितं जातानुतापेव सा ॥

This is nothing but उत्प्रेक्षा.

## 83 (c) समाहित.

कारणान्तरसम्पत्तिर्दैवादारम्भ एव हि ।
यत्र कार्यस्य जायेत तज्जायेत समाहितम् ॥ Vâg.

This is nothing but समाधि.

## 84 साम्य.

अर्थक्रियया यस्मिन्नुपमानस्यैति साम्यमुपमेयम् ।
तत्सामान्यगुणादिककारणया तद्भवेत् साम्यम् ॥ Ru.

Ex, अभिसर रमणं किमिमां दिशमैन्द्रीमाकुलं विलोकयसि ।
शशिनः करोति कार्यं सकलं मुखमेव ते मुग्धे ॥ यत्रोपमेयं उपमानस्य साम्यमुपैति, परंतु उपमायामिव न केवलं साधारणधर्मेण किं तु साधारणधर्ममूलिकयाऽर्थक्रियया तत्र साम्यालंकारः । उदाहरणे न केवलं शशीव कांतिमद्वदनमिति वर्ण्यते किं तु कांतिकार्यप्रकाशरूपेणेति ।

This is प्रतीपध्वनि.

## 85 सूक्ष्म.

यत्रायुक्तिमदर्थो गमयति शब्दो निजार्थसंबद्धम् ।
अर्थान्तरमुपपत्तिमदिति तत्संजायते सूक्ष्मम् ॥ Ru.

Ex. आदौ पश्यति बुद्धिर्व्यवसायोऽकालहीनमारभते ।
धैर्यं व्यूढमहाभरमुत्साहः साधयत्यर्थम् ॥

यत्राऽयुक्तिसिद्धोऽर्थः स्वसंबद्धं युक्तिमदर्थांतरं गमयति तत्र सूक्ष्मालंकारः । उदाहरणे दर्शनाक्रियाकर्तृत्वेनोच्यमानाऽपि बुद्धिस्तथा न घटते अचेतनत्वात् । अतोऽयुक्तिसिद्धोऽर्थो बुद्धिरूपः स्वसंबद्धार्थांतरं पुरुषरूपं युक्तिमद् दर्शनक्रियाकर्तृत्वयोग्य गमयतीति लक्षणसंगतिः । एव व्यवसायादिष्वपि ।

This is included under the first kind of अतिशयोक्ति. (Vide Udyota p. 58).

## 86 संभव.

संभवः स्यादलंकारः प्रमाणत्वं प्रयाति यः । स्यान्मे कदाचिदिंद्रत्वं चित्रा कर्मगतिर्यतः । A.

Vide Remark on अनुपलब्धि.

## 87 संभावना.

संभावना यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये । यदि शेषो भवेद्वक्ता कथिताःस्युर्गुणास्तव ॥ Ku. ऊहःतर्कः । यदीति । ईश्वरं प्रत्युक्तिः। शेषः सहस्रमुखः । अत्र यदीत्यादिकल्पनया ईश्वरगुणानंत्यत्वसिद्धिः ।

This is obviously the third kind of अतिशयोक्ति. (Vide Udyota p. 110).

## 88 (a) हेतु.

हेतो र्हेतुमता सार्धं वर्णनं हेतुरुच्यते । असावुदेति शीतांशुर्मानच्छेदाय सुभ्रुवाम् । Ku.

This does not deserve to be a figure, since no strikingness is apprehended from it.

## 88 (b) हेतु.

हेतुहेतुमतोरैक्यं हेतुं केचित्प्रचक्षते । लक्ष्मीविलासा विदुषां कटाक्षा वेंकटप्रभोः ॥ Ku.

This is included under the first kind of अतिशयोक्ति. (Vide Udyota p. 58 and Notes p. 66).

# शुद्धिपत्रकम्.

| पृ. | पं. | शुद्ध. | पृ. | पं. | शुद्ध. |
|---|---|---|---|---|---|
| ३ | २ | मुपादाने | ५८ | १९ | शुद्धसा |
| ४ | १० | तद्वत् | ५९ | १८ | गीतिश्छन्दः । |
| ९ | १८ | भुवनम् । | ६० | ७ | निर्झरः । |
| १५ | २७ | लक्षकत्वेऽपि | ६२ | १६ | भावेऽप्युपमा |
| १६ | १२ | यो धर्म | ६४ | ९ | वैधर्म्यवि |
| १६ | २४ | नारे लक्ष | ६४ | २४ | तवेति । |
| १७ | ७ | स सहस्रा | ६५ | ४ | एकस्थस्यैव |
| १७ | २७ | सहस्रारायुधीय- तीति पाठे इदम् | ७३ | २२ | इयमिति |
| | | | ७८ | १७ | जहार । |
| | | | ७९ | १६ | त्यपि (तस्मिन्)तव |
| १९ | १२ | भावात्त्रया | ७९ | २७ | पेक्ष्य दाहा |
| २० | १२ | दिका रश | ८३ | ७ | यद्द्वयो |
| २१ | २० | निरुपमा | ९० | २३ | दीर्घाः |
| २२ | १३ | बाधात् । | ९२ | २७ | वितीर्णे |
| २३ | २० | पमा न । साधा | १०४ | १० | त्वोष्ठे |
| २३ | २१ | संबन्ध | १०५ | १२ | दिराद्यैरने |
| २४ | ६ | व्याहारे | १०९ | १ | म्यस्येहा |
| २५ | १९ | पद्मलक्ष्मी | ११० | १५ | भण्यते । |
| २८ | ११ | दाच्युता | ११० | २७ | व्याजोक्तिः |
| ३० | २५ | विषयितया | ११४ | ९ | उत्तरेति |
| ३० | २७ | ष्टान्त | ११७ | ५ | उत्तरोत्तर |
| ३१ | ६ | त्रये । अन्त | ११८ | १७ | करण्यस्य |
| ३१ | २३ | भिव्याहारे | | | |
| ४१ | २४ | भेदश्चात्र । | १२२ | १ | तत्फलं |
| ४१ | २८ | उदयमिति । | १२२ | २० | षम्यम् । अत्रान- योर्योगोऽनुचित इति व्यंग्यम् । सिंहि |
| ४३ | ११ | संक्षेपेण । एकेने- व शब्देन । तस्य श्लेषत्वादिति । उप | १२२ | २२ | राहुः । सद्यः |
| ४३ | २५ | न्नस्य प्रकृते | १२५ | १५ | वृत्तम् । |
| ४५ | ४ | ताभ्यामभेदे | १२५ | २७ | गूढतया |
| ५० | ३ | निमित्त | १२८ | १८ | स्त्रमिति |
| ५१ | २७ | व्यज्यते | १३२ | ११ | भावमपि अनु |
| ५३ | १५ | तयोरभावा | १३३ | २९ | पृथक्त्वे |
| [illegible] | ० | श्लेषेणै | १३४ | २५ | त्ययनिर्वेद |

| | | | | | |
|---|---|---|---|---|---|
| १३५ | ११ | निरासात् । | १४८ | २१ | माना इस्रित |
| १३५ | १२ | नाऽऽधेय | १४८ | २५ | चन्द्राबिम्बं |
| १३६ | ६ | भूर्भुवि | १४९ | ११ | वक्रेन्दौ |
| १३७ | ५ | प्रगुणतया | १५० | २५ | च्छेदप्रतीतेः |
| १३७० | ३० | प्रगुणया | १५१ | ८ | मिति प्रति |
| १३९ | १९ | हंसस्य प्राक | १५१ | २५ | दिग्दल |
| १४१ | २३ | रमनपेक्ष्येति | १५२ | १५ | चोभयभा |
| १४२ | १३ | र्थालंकार | १५६ | ८ | मौञ्जीस्थानी |
| १४२ | १९ | अनिश्चये इति | १५७ | १२ | तदैकतर |
| १४२ | २५ | महल्ला | १५७ | १६ | भाग्यस्य |
| १४२ | २५ | च्वक्रन्ती | १५७ | २० | पमा प्रस्तुतेत्यर्थः। |
| १४२ | २६ | च्वक्रन्तीं | १५७ | २७ | यथा |
| १४५ | २ | शशाङ्केन | १५९ | ११ | गङ्गेव |
| १४५ | ८ | वात् । कथ | १६१ | ११ | रैपोषं |

## ADDENDA AND CORRIGENDA.

| Page. | Line. | | | | |
|---|---|---|---|---|---|
| 13 | 27 | before | called | add | be |
| 16 | 13 | „ | Indirect | „ | the |
| „ | 16 | „ | *Indirect* | „ | *the* |
| 18 | 15 | for | म | read | मा |
| „ | 22 | „ | भ्रु | „ | भ्रू |
| 20 | 1 | „ | *is* | „ | *in* |
| 24 | 6 | „ | कसुम | „ | कुसुम |
| 25 | 24 | „ | उममान | „ | उपमान |
| 26 | 18 | „ | indication | „ | गौणी साध्यवसाना लक्षणा |
| 43 / „ | 19 / 20 | No doubt as to there being a संकर between these should be raised, | | Read these word in *Italics* | |
| 48 / „ | 25 / 26 | to be a figure belonging to both a word and a sense | | „ | |
| 56 | 3 | after | कृचविलेखन | add | &c. |
| 59 | 32 | for | स्ये | read | स्यो |
| 70 | 1 | „ | . e. | „ | i. e., |
| 74 | 28 | „ | मखं | „ | मुखं |

| Page. | Line. | | | | |
|---|---|---|---|---|---|
| „ | 29 | „ | क्रुरं | „ | क्षुरं |
| 75 | 31 | „ | तुल्ययोगिता, one | „ | तुल्ययोगिता one, |
| 83 | 8 | „ | other such cool | „ | similar other |
| 104 | 15 | „ | view | „ | views |
| 112 | 7 | „ | ष्ण | „ | ष्णु |
| 113 | 30 | „ | रूपत्वने | „ | रूपत्वेन |
| 124 | 25 | „ | KÂ | „ | KÂS |
| 140 | 3 | „ | of it | „ | of its |
| „ | 4 | „ | subject | „ | a subject |
| 41 | 15 | „ | दृष्टे तत्सद्रशे | „ | दृष्टे तत्सदृशे |
| 46 | 8 | „ | *a question* | „ | *question* |
| 48 | 28 | „ | थम् | „ | थेम् |
| 63 | 13 | „ | *although he is* | „ | ( although he is |
| 76 | 21 | „ | *although* | „ | ( *although* |
| „ | 22 | „ | उपमान | „ | उपमेय ) |
| „ | „ | „ | ( *with the* उपमेय ) | „ | *with the* उपमान |
| 77 | 21 | „ | त्य | „ | त्व |

## APPENDIX.

| | | | | | |
|---|---|---|---|---|---|
| 1 | 24 | „ | कपि | „ | कुपि |
| 3 | 1 | „ | अ ा | „ | अर्था |
| 3 | 13 | „ | यक | „ | यकं |
| 3 | 28 | „ | जललभा | „ | जललाभ |
| 4 | 15 | „ | स्थैर्था | „ | स्थैर्या |
| 5 | 6 | „ | म्राद्यं | „ | म्राद्यं |
| 6 | 6 | „ | त्तेया॰ | „ | तयो |
| 6 | 14 | „ | शीतन | „ | शीतेन |
| 6 | 15 | „ | तान्य | „ | तान्यु |
| 7 | 2 | „ | साद | „ | साद्द |
| 9 | 1 | „ | वद: | „ | वर्द: |
| 10 | 6 | „ | श्रीद॰ | „ | श्रीदः |
| 14 | 16 | „ | वृतां | „ | वृत्तां |
| 16 | 15 | „ | गारस | „ | गाररस |